हृत्योऽपरिष्टा देतस्यैऽतास्मिन्नस्तृते निद्ध्यातिति !! १ !! तदु ह
होवाच शाट्यायनिस्समयैऽवाऽतदेनं कस्तद्वेद । यद्येता आपो वा
अभितो यद्वायुं[1] वा एष उपह्वयते रश्मीन्वा एष तदेतस्मै[2] [3] व्यूह-
तीति ॥ २ ॥ अथ[4] होऽवाचो[5]ऽलुक्यो[6] जानश्रुतेयो यत्र वा एष
एतत् तपत्येतदेवामृतम् । एतच्चेद्वै प्राप्नोति ततो मृत्युना पाप्मना
व्यावर्तते ॥ ३ ॥ कस्तद्वेद यत्परेणा[8]ऽऽदित्यमन्तरिक्षमिदमना-
लयनमवरेण[9] ॥ ४ ॥ अथैऽतदेवाऽमृतम् । एतदेव मां यूयम्प्राप-
यिष्यथ[10] । एतदेवाहं नातिमन्य[11] इति ॥ ५ ॥ तान्येतान्यष्टौ ।
अष्टाक्षरा गायत्री । गायत्रं साम । ब्रह्म उ गायत्री । तदु ब्रह्मा-
भिसम्पद्यते अष्टाशफाः पशवस्तेनो पशव्यम् ॥५॥ १, ६ ॥

प्रथमेऽनुवाके षष्ठः खण्डः ।

ता एता अष्टौ देवताः । एतावदिदं सर्वम् । बे [......]
करोति ॥ १ ॥ स नैषु लोकेषु पाप्मने भ्रातृव्यायावकाशं
कुर्यात् ! मनसैनं निर्भजेत् ॥ २ ॥ तदेतदृचाऽभ्यनूच्यते ।

"चत्वारि वाक् परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः ।

---

६, १ वाऽयं २ तद्, त ३ स्यै ४ अथो ५ ओम् ६ऽवाचा (!) उलुक्यो, उलुक्यो ७ यत् ८ परोद्य ९ अन्विक्षय १० त, प्रापिप् ११ यत ।

गुहा त्रीणि निहिता[1] नेऽङ्गयन्ति[2][3]

तुरीयं वाचो मनुष्या वदन्ति" इति ॥३॥

तद् यानि तानि गुहात्रीणि निहिता नेऽङ्गयन्ती (ऽती) ऽम एव ते लोकाः ॥४॥ तुरीयं वाचो मनुष्या वदन्तीति[5] । चतुर्भाग ह वै तुरीयं वाचः । सर्वयास्य वाचा सर्वैरेभिर्लोकैस्सर्वेणास्य कृतम्भवाति य एवं वेद ॥ ५ ॥ स यथाश्मानमाखणमृत्वा[6] लोष्ठो विध्वंसत एवमेव स विध्वंसते य एवं विद्वाँसमुपवदाति ॥ ६ ॥

प्रथमेऽनुवाके सप्तमः खण्डः ।

प्रथमोऽनुवाकस्समाप्तः ॥

प्रजापातिर्वा इदं त्रयेण वेदेनाऽजयद्यदस्येदं जितं तत् ॥१॥ स ऐक्षतेत्थं चेद्वा अन्ये देवा अनेन वेदेन[1] यक्ष्यन्त इमां वाव ते जितिं जेष्यन्ति येऽयम्मम ॥ १ ॥ हन्तेऽमं त्रयं वेदम्पीळयानीति[2] ॥ ३ ॥ स इमं त्रयं वेदमपीळयत । तस्य पीळयन्नेकमेवाक्षरं नाशक्नोत्[3] पीळ्यितुमोमिति यदेतत् ॥ ४ ॥ एष उ ह वाव सरसः । सरसा ह वा एवंविदस्त्रयीविद्या भवति ॥ ५ ॥ स इमं रसम्पी-

---

७, १ तानि २ नो, ओम ३ गयन्ति ४ तानि ५ ओम ६ कृत्वा ७ लोष्टो ८ ओम् एवम् विध्वंसते ९ स एषो...उपवदन्ति ।

१, ने २—दा, द ३—क्नो ४. द्रयं ।

ळयित्वा पनिधायोऽऽर्ध्वोऽद्रवत् ॥ ६ ॥ तं द्रवन्तं चत्वारो देवाना-

मन्वपश्यन्निन्द्रश्चन्द्रो रुद्रस्समुद्रः। तस्मादेते श्रेष्ठा देवानाम् एते ह्ये[5] [6]-

नमन्वपश्यन्[7] ॥ ७ ॥ स योऽयं रस आसीत्तदेव तपोऽभवत् ॥८॥

त इमं रसं देवा अन्वैच्छन्त[8]। तेऽभ्यपश्यन्त[9] स तपो[10] वा अभूदिति

॥ ९ ॥ इममु वै त्रयं वेदम्मरीमृशित्वा तास्मिन्नेतदेवाक्षरमपीळित-

मविन्दन्[11]नोमिति यदेतत् ॥ १० ॥ एष उ ह वाव सरसः[12]। तेनै-

नम्प्रायुवन्[13]। यथा मधुना लाजान् प्रयुयादेवम् ॥ ११ ॥ तेऽभ्य-

तप्यन्त। तेषां तप्यमानानामाप्यायत वेदः। तेऽनेन च तपसाऽपीनेन

च वेदेन तामु एव जितिमजयन्[16] याम्प्रजापतिरजयत्[17]। त एते सर्व

एव प्रजापतिमात्रा अया३म्[18] अय३म्[19] इति ॥ १२॥ तस्मात्तप्यमा-

नस्य भूयसी कीर्तिर्भवति भूयो यशः। स य एतदेवं वेदैवमेषा-

ऽपीनेन वेदेन यजते[19]। यदो याजयत्येवमेवाऽपीनेन[20] वेदेन[21] याजयति

॥ १३ ॥ तस्य हैतस्य नैव काचनाऽर्तिरस्ति य एवं वेद। स

य एवैनमुपवदति[22] सार्तिमृच्छति[23] ॥ १४ ॥

द्वितीयेऽनुवाके प्रथमः खण्डः।

---

५. ह्येते ६. ओम् ७ सेनं ८ अन्, पेच ९ तेभ्यप १०--ह्ययंस्त--११ पीळितं, ता १२ वा १३ प्राय १४ ययाद् १५. तेन; ते एन, तेनैन १६. यत १७-यन् १८ अ३याम १९ ओम् यजते यदो-वेदेन २० एव अपि २१ अस्ति २२ उपदति उवदति २३ अच्छति, आर—

तदाहुर्यदोवा[1] ओवा इति गीयते कात्र[2]भवति क सामेति ॥१॥ ओम् इति वै साम वागित्यृक्। ओमिति मनो वागिति वाक्। ओमिति प्राणो वागित्येव वाक्। ओमितीन्द्रो वागिति सर्वे देवाः। तदेतदिन्द्रमेव सर्वे देवा अनुयन्ति ॥२॥ ओमित्येतदेवाक्षरम्। एतेन वै संसवे परस्येन्द्रं वृञ्जीत[4]। एतेन ह वै तद्बको दाल्भ्य आजकेशिना[5]मिन्द्रं ववर्ज[6]। ओमित्येतेनैवाऽऽनिनाय[7] ॥३॥ तान्येतान्यष्टौ। अष्टाक्षरा गायत्री। गायत्रं साम। ब्रह्म उ गायत्री। तदु ब्रह्माभिसम्पद्यते। अष्टाशफाः पशवस्तेनो पशव्यम् ॥४॥ तस्यैतानि नामानीन्द्रः कर्माक्षि[8]तिरमृतं व्योमान्तो वाचः। बहुर्भूय[9]स्सर्वं सर्वस्मादुत्तरं ज्योतिः। ऋतं सत्यं विज्ञानं[10] विवाचनमप्रतिवाच्यम्[11]। पूर्वं सर्वं सर्वा वाक्। सर्वमिदमपि धेनुः पिन्वते परागर्वाक् ॥५॥१।८॥

द्वितीयेऽनुवाके द्वितीयः खण्डः।

सा[1] पृथक्सलिलं कामदुघाक्षिति प्राणसहितं चक्षुश्श्रोत्रं[2] वाक्प्रभूतम्मनसा व्याप्तं हृदयाग्रं[3] म्ब्राह्मणभक्त[4] मन्त्रशुभं वर्षपवित्रं

---

१. एवा। २. ओवात (=ओवा १?) ३. ऋग्।

४. अवृञ्ज्-।५-शीन्-,शीम-।६. ववज।

७. वनिनाय।८-६; क्षीति। ६-हिर।१०. विजिवा-।११-प्र:।

१ सा। २-क्षुश्रोत्र्-।३-दयोग्र्-।४. भ्रक्त्रम, भ्रत्रम, भूत्रम।

गोभग म्पृथिव्युपरं तपस्तु वरुणपरियतन[५]मिन्द्रश्रेष्ठं सहस्राक्षर-
मयुतधारममृतं दुहाना[६] सर्वान् इमाँल्लोकानभिविक्षरतीऽति[७] ॥१॥
तदेतत् सत्य मक्षरं यदोम् इति । तस्मिन्नापः प्रतिष्ठिता अप्सु[८]
पृथिवी पृथिव्यामिमे लोकाः ॥२॥ यथा सूच्या पलाशानि
सन्तृण्णानि स्युरेवमेतेनाक्षरेणेमे लोकास्संतृण्णाः ॥३॥
तदिदमिमान्[९] अतिविध्य दशधा क्षराति शतधा सहस्रधाऽयुतधा
प्रयुतधा ( नियुतधा ) ऽर्बुदधा[१०] न्यर्बुदधा[११] निखर्वधा पद्ममक्षिति-
व्योमान्तः[१२] ॥४॥ यथौघो विष्यन्दमानः परः-परोवरीयान् भव-
त्येवमेवैतदक्षरम्परः-परोवरीयो[१३] भवति ॥५॥ ते हैते[१४] लोका
ऊर्ध्वा एव श्रिताः । इम एवं त्रयोदशमासाः ॥६॥ स य एवं
विद्वानुद्गायति स एवमेवैताँल्लोकानातिवहाति । ओमित्येतेनाक्षरेणा-
मुमादित्यम्मुख आधत्ते । एष ह वा एतदक्षरम् ॥७॥ तस्य[१५]
सर्वमाप्तम्भवाति सर्वं जितं न हाऽस्य कश्चन[१६] कामोऽनाप्तो भवति
य एवं वेद ॥८॥ तद्ध पृथुर्वैन्यो[१७] दिव्यान् व्रात्यान् पप्रच्छ ।

---

५. पर्य्यंत–। ६–नाः। ७ ओमिति । ८–प्सु: । ९ आम्, 'इदं' और दशधा के मध्य स्थान रिक्त है। १० निर्बु–।११ निखर्वाच, निखर्वदाच् । १२–नान् । १३ ओम् । परः परो ।१४ तै । १५ तस्ति।१६ कथव ।१७ वै ।

स्थूणां दिवस्तम्भनीं सूर्यं माहुरन्तरिक्षे सूर्यः पृथिवीप्रतिष्ठः । अप्सु भूमीश्शिश्रियेरे[१८][१९] भूरिभाराः किं स्विन्महीरधितिष्ठन्त्याप इति ॥ ९ ॥ ते ह प्रत्यूचुस्

स्थूणामेव दिवस्तम्भनीं सूर्यं माहुरन्तरिक्षे सूर्यः पृथिवीप्रतिष्ठः । अप्सु भूमीश्शिश्रियेरे[१८][१९] भूरिभारास्सत्यम्महीरधितिष्ठन्त्याप[२०] इति ॥ १० ॥

ओमित्येतदेवाक्षरं सत्यम् । तदेतदापोऽधितिष्ठन्ति॥११॥२।१०॥

द्वितीयेऽनुवाके तृतीयः खण्डः । द्वितीयोऽनुवाकस्समाप्तः ।

———:०:———

प्रजापतिः प्रजा असृजत । ता एनं सृष्टा अन्नकाशिनीरभितस्समन्तम्पर्यविशन् ॥१॥ ता अब्रवीत् किंकामास्स्थेति । अन्नाद्यकामा इत्यब्रुवन्॥२॥सोऽब्रवीदेकं वै[१] वेदमन्नाद्यमस्ति सामैव[२] । तद्वः प्रयच्छानीति[३] । तन्नः प्रयच्छेत्यब्रुवन् ॥३॥ सोऽब्रवीदिमान्वै पशून् भूयिष्ठमुपजीवामः । एभ्यः प्रथमम्प्रदास्यामीति ॥४॥ तेभ्यो हिङ्कारम्प्रायच्छत । तस्मात्पशवो हिङ्कृरिक्रतो[४] विजिज्ञास-

---

१८—मिश्र् । १९ शिशिरे । २० अधित ।

१. वा । २. षाम— । ३ पृय— । ४ —कृतो ।

माना इव चरन्ति ॥५॥ प्रस्तावम्मनुष्येभ्यः । तस्मादु ते स्तुवत[5]
इवेदम्मे भविष्यत्यदो मे भविष्यतीऽति ॥६॥ आदिं वयोभ्यः ।
तस्मात् तान्याददानान्युपापपातमिव चरन्ति ॥७॥ उद्गीथं देवेभ्यो
ऽमृतम् । तस्मात्तेऽमृताः ॥८॥ प्रतिहारमारण्येभ्यः पशुभ्यः ।
तस्मात्ते प्रतिहृता[6]स्तन्तस्य[7]माना इव चरन्ति ॥९॥ १।१.१।।

तृतीयेऽनुवाके प्रथमः खण्डः ।

उपद्रवं गन्धर्वाप्सरोभ्यः[1] । तस्मात्त उपद्रवं गृह्णन्त इव
चरन्ति ॥१॥ निधनम्पितृभ्यः । तस्मादु ते निधनसंस्थाः ॥२॥
तद्यदेभ्यस्तत् साम प्रायच्छदेतमेवैभ्यस्तदादित्यम्प्रायच्छत् ॥३॥
स यदनुदितस्सहिङ्कारोऽथोंदितः[2] प्रस्ताव आसंगवमादिर्[3]माध्यन्दिन
उद्गीथोऽपराह्णः प्रतिहारो यदुपास्तमयं लोहितायाति स उपद्रवो
ऽस्तमित एव निधनम् ॥४॥ स एष सर्वैर्लोकैस्समः । तद्यदेष
सर्वैर्लोकैस्समस्तस्मादेष एव साम । स ह वै सामवित् स साम
वेद[4] य एवं वेद ॥५॥ ते ऽब्रुवन् दूरे वा इदमस्मत् । तत्रेदं कुरु

---

५. स्तुवतेव । ६. प्रतिहतास्त् । ७. तात् ( ? ) स्त् ( ! ) यमाना;
ताातस्यमाना ।

१—आपसरेभ्यः । २ अथोंदित- । ३ आदित्यः । ४ द्विवार 'स सामवेद'
देता है ।

यत्रोपजीवामेति[५] ॥६॥ तद्दतूनभ्यत्यनयत् । स वसन्तमेव हिङ्कार-मकरोद्[६]ग्रीष्मम्प्रस्तावं वर्षामुद्गीथं[७] शरदम्प्रतिहारं हेमन्तं निधनम् । मासार्धमासावेव सप्तामावकरोत् ॥७॥ तेऽब्रुवन्नेदीयो न्वावैतर्हि । तत्रैव कुरु यत्रोपजीवामेति[५] ॥८॥ तत् पर्जन्यमभ्यत्यनयत् । स पुरोवातमेव हिङ्कारमकरोत् ॥९॥ १ । १.२॥

तृतीयेऽनुवाके द्वितीयः खण्डः ।

जीमूतान् प्रस्तावं[१] स्तनयित्नुमुद्गीथं विद्युतम्प्रतिहारं वृष्टिं[२] निधनम् । यद्वृष्टात्प्रजाश्चौषधयश्च जायन्ते ते सप्तम्यावकरोत्[३] ॥१॥ तेऽब्रुवन्नेदीयो न्वावैतर्हि । तत्रैव कुरु यत्रोपजीवामेति[४] ॥२॥ तद्यज्ञमभ्यत्यनयत् । स यजूंष्येव हिङ्कारमकरोदृचः प्रस्तावं सामान्युद्गीथं स्तोमम्प्रतिहारं छन्दो निधनम् । स्वाहाकारवषट्-कारावेव सप्तमावकरोत् ॥३॥ तेऽब्रुवन् नेदीयो न्वावैतर्हि । तत्रैव कुरु यत्रोपजीवामेति[४] ॥४॥ तत्पुरुषमभ्यत्यनयत्[५] । स मन एव हिङ्कारमकरोद्वाचम्प्रस्तावम्प्राणमुद्गीथं चक्षुः प्रतिहारं श्रोत्रंनिधनम रेवश्चैव प्रजां च सप्तमावकरोत् ॥५॥ तेऽब्रुवन्नत्र वा एनत्तद्-

---

५—म इति । ६ कर्— । ७ प्रस्तावः । वर्षा उद्गीथः, शरत्प्रतिहारः, ओम शरत्प्रतिहारम् ।

१. प्रस्तात्रैवम् ।२—तिर् । ३सपतम्—।४म इति । ५ अभ्यत्यत्यन—।

कर्यत्रोपजीविष्याम इति ॥६॥ स विद्यादहमेव सामास्मि मय्येता देवता इति ॥७॥ १ । १३॥

तृतीयेऽनुवाके तृतीयः खण्डः ।

न ह दूरे देवतस्स्यात्[1] । यावद्ध वा आत्मना देवानुपास्ते तावदस्मै देवा भवन्ति ॥ १ ॥ अथ य एतदेवं वेदाऽहमेव सामाऽस्मि मय्येतास्सर्वा[2] देवता इत्येवं[3] हाऽस्मिन्नेतास्सर्वा देवता भवन्ति ॥२॥ तदेतदेवश्रुत्साम । सर्वा ह वै देवताश्शृण्वन्त्येवं-विदम्पुण्याय साधवे । ता एनम्पुण्यमेव साधु कारयन्ति ॥ ३ ॥ स ह स्माऽऽह सुचित्तश्शैलनो[5] यो यज्ञकामो मामेव स वृणीताम् । तत एवैऽनं यज्ञ उपनंस्यति । एवंविदं ह्युद्गायन्तं सर्वा देवता अनुसंतृप्यन्ति । ता अस्मै तृप्तास्तथा करिष्यन्ति यथैऽनं यज्ञ उपनंस्यतीऽति ॥४॥ १ । १४॥

तृतीयेऽनुवाके चतुर्थः खण्डः । तृतीयोऽनुवाकस्समाप्तः ।

---

देवा वै स्वर्गं लोकमैप्सन् । तं न शयाना नाऽऽसीना[1] न तिष्ठन्तो[2] न धावन्तो नैव केनचन कर्मणाऽऽप्नुवन् ॥ १ ॥ ते देवाः प्रजापतिमुपाधावन्[3] स्वर्गं वै लोक मैप्सिष्म । तं न शयाना

---

१ देवत । २ ओम । ३ एस्म । ४ देवश्रेत् । देवश्रूत् । एवश्रूत् । ५—नं ।
१—ऽऽशीना । २—न्त्यो । ३ उपाय—।

नाऽऽसीना न तिष्ठन्तो न धावन्तो नैव केनचन कर्मणाऽऽपाम।
तथा नोऽनुशाधि यथा स्वर्गं लोकमाप्नुयामे[४]ऽति ॥२॥ तानब्रवीत्
साम्नाऽनूचेन स्वर्गं लोकम्प्रयाते[५]ऽति । ते साम्नाऽनूचेन स्वर्गं
लोकम्प्रायन्[६] ॥ ३ ॥ प्र वा इमे साम्नाऽगुरिति । तस्मात्प्रसाम
तस्मादु प्रसाम्यन्नमत्ति[७] ॥४॥ देवा वै स्वर्गं लोकमायन्[८] । त एता-
न्यृक्पदानि शरीराणि धून्वन्त आयन्[९] । ते स्वर्गं लोकमजयन् ॥५॥
तान्या दिवः प्रकीर्णान्यशेरन् । अथेऽमानि प्रजापतिर्ऋक्पदानि
शरीराणि सञ्चित्याऽभ्यर्चत् । यद[१०]भ्यर्चत्ता[११] एवर्चोऽभवन् ॥६॥
१ । १५॥

चतुर्थेऽनुवाके प्रथमः खण्डः ।

सैऽवर्गभवदियमेव श्रीः । अतो देवा अभवन् ॥१॥
अथैऽषामिमामसुरा[१]श्रियमविन्दन्व । तदेवाऽऽसुरमभवत् ॥२॥
ते[२] देवा[३] अब्रुवन् या वै नश्श्रीरभूदविदन्त[४] तामसुरः । कथं न्वेषा-
मिमांश्रियम्पुनरेव[५] ज्येमेऽति ॥३॥ तेऽब्रुवन्नृच्येव साम गायामेति ।

---

४ प्रयामे । ५ प्रयाते, प्रयामे, प्रयामे । ६ लोकंमप्रावत् । ७ इसके बाद कुछ गड़ बड़ है। ५ के पूर्व यह सब में लिखा है 'त एतान्यृक्पदानि शरीराणि धून्वन्त आयन् ( स्येयन् )। ते स्वर्गं लोकमजयन् (-अत्)। अथेऽमानि प्रजापतिर् ...ता एवर्चोऽभवन् । ८ यत् । ९ ओम । ते स्वर्ग अजयन्, यहां अधिक है। १० ओम । यद्...... । ११ ओम । ता एव।

१ आस-। २ तद् । ३ एवा । ४ चिन्दन्त । ५ अव ।

ते पुनः प्रत्यादुत्यार्चं सामाऽगायन् । तेनाऽस्माल्लोकाद-
सुराननुदन्त ॥४॥ तद्वै माध्यन्दिने च सवने तृतीयसवने च
नर्चोऽपराधोऽस्ति । स यत्ते ऋचि गायति तेनाऽस्माल्लोकाद्
द्विषन्तम्भ्रातृव्यं नुदते । अथ यदमृते देवतासु प्रातस्सवनं गायति
तेन स्वर्गं लोकमेति ॥५॥ प्रजापतिर्वै साम्नेऽमां जितिमजयद्याऽस्ये
ऽयं जितिस्ताम् । स स्वर्गं लोकमारोहत् ॥६॥ ते देवाः प्रजापति-
मुपेत्याऽब्रुवन्नस्मभ्यमपीऽदं साम प्रयच्छेति । तथेति । तदेभ्य-
स्साम प्रायच्छत् ॥७॥ तदेनानिदं साम स्वर्गं लोकं नाऽकामयत
वोढुम् ॥८॥ ते देवाः प्रजापति मुपेत्याऽब्रुवन् यद्वै नस्साम प्रादा
इदं वै नस्तत्स्वर्गं लोकं न कामयते वोढुमिति ॥९॥ तद्वै पाप्मना
संसृजतेति । कोऽस्य पाप्मेति । ऋगिति । तदृचा समसृजन्
॥१०॥ तदिदम्प्रजापतेर्गर्हयमाणमतिष्ठदिदं वै मा तत्पाप्मना सम-
स्राक्षुरिति । सोऽब्रवीद्यस्त्वैतेन व्यावर्तयाद्व्येव स पाप्मना वर्तेत
इति ॥११॥ स य एतदृचा प्रातस्सवने व्यावर्तयति व्येव स
पाप्मना वर्तते ॥१२॥ १ । १६॥

चतुर्थेऽनुवाके द्वितीयः खण्डः ।

---

६–द्रुच्यत्य । ७ जीत–। ८–पराधो । ९–र्चि । १०–नृते । ११ तम् ।
१२ ऋर– । १३ न कामायते, न कामयते । १४ कामाय्–, सामय्, ।
१५संस्र– । १६ पव ।

तदाहुर्यदोवा ओवा इति गीयते कात्रर्भवति क सामेति ॥१॥ प्रस्तुवन्नेवाष्टाभिरक्षरैः प्रस्तौति । अष्टाक्षरा गायत्री । अक्षरमक्षरं त्र्यक्षरम् । तच्चतुर्विंशतिस्सम्पद्यन्ते । चतुर्विंशत्यक्षरा गायत्री ॥२॥ तामेताम्प्रस्तावेन[१]र्चमाप्त्वा या श्रीर्याऽपचितिर्यस्स्वर्गो[२] लोको यद्यशो यदन्नाद्यं तान्यागायमान आस्ते ॥३॥ १।१।७॥

चतुर्थेऽनुवाके तृतीयः खण्डः ।

प्रजापतिर्देवानसृजत । तान्[१] मृत्युः पाप्मान्वसृज्यत ॥१॥ ते देवा प्रजापतिमुपेत्याब्रुवन् कस्मादु[२] नोऽसृष्ठा[३] मृत्युं चेन्नः पाप्मानमन्ववस्रक्ष्यन्नासिथेति[४] ॥२॥ तानब्रवीच्छन्दांसि सम्भरत । तानि यथायतनम्प्रविशत[५] ततो मृत्युना पाप्मना व्यावर्त्स्यथेति[६] ॥३॥ वसवो गायत्रीं समभरन् । तां ते प्राविशन् । तान् साऽच्छादयत् ॥४॥ रुद्रास्त्रिष्टुभं समभरन् । तां ते प्राविशन् । तान् साऽच्छादयत्[७] ॥५॥ आदित्या जगतीं समभरन् । तां ते प्राविशन् । तान् साऽच्छादयत् ॥६॥ विश्वेदेवा अनुष्टुभं समभरन् । तां ते प्राविशन् । तान् साऽच्छादयत् ॥७॥ तान् अस्यामृच्यस्वरायाम्[७]मृत्युर्निरजा-

---

१. प्रस्तावेप्रस्तवेन । २–गं ।

१. ता, ताः । २ कस्मा । ३–ष्टा । ४–सृक्षन्न । ५–श्वर ६–वक्स्य, वत्स्य–। ७ च्छाद, याम ।

नाद्यथा मणौ मणिसूत्रम्परिपश्येदेवम्[८] ॥८॥ ते स्वरम्प्राविशन् । तान् स्वरे सतो न[९] निरजानात् । स्वरस्य तु घोषेणाऽन्वैत ॥९॥ त ओमित्येतदेवाक्षरं समारोहन् । एतदेवाक्षरं त्रयीविद्या । यददो[१०]ऽमृतं तपति तत्प्रपद्य ततो मृत्युना पाप्मना व्यावर्तन्त ॥१०॥ एवमेवैवं विद्वान् ओमित्येतदेवाक्षरं समारुह्य यददो[१२]ऽमृतं तपति तत्प्रपद्य ततो मृत्युना पाप्मना व्यावर्ततेऽथो यस्यैवं विद्वानुद्गायति ॥११॥ ३।१८॥

चतुर्थेऽनुवाके चतुर्थः खण्डः । चतुर्थोऽनुवाकस्समाप्तः ॥

——:०:——

अथैतदेकविंशं साम ॥१॥ तस्य त्र्य्[१]य्येव विद्या हिङ्कारः । अग्निर्वायुर्[२]रसावादित्य एष प्रस्तावः । इम एव लोका आदिः । तेषु[३] हीदं लोकेषु सर्वमाहितम् । श्रद्धा यज्ञो[४] दक्षिणा एष उद्गीथः । दिशोऽवान्तरदिश आकाश एष प्रतिहारः । आपः प्रजा ओषधय एष उपद्रवः । चन्द्रमा नक्षत्राणि पितर एतन्निधनम् ॥२॥ तदेतदेकविंशं साम । स य एवमेतदेकविंशं साम वेदैतेन हास्य

---

८–यैदू । ९ नास्ति । १० ओ । ११–पेदू । १२ यदो, ओ ।

१. त्रै । २ वावायुर । ३ येषु । ४–ज्ञा ।

सर्वेणोद्गीतम्भवस्येतस्माद्[5]व सर्वस्मादात्मच्च्यते[6] य एवं विद्वांसमुप-
वदाति ॥३॥ १।१.९॥

पञ्चमोऽनुवाकस्समाप्तः ।

——:०:——

इदमेवेदमग्रेऽन्तरिक्ष[1]मासीत् । तद्वेवाप्येतर्हि ॥१॥ तद्यदेतदन्तरिक्षं[1,2] य[3] एवा[4]ऽयम्पवत एतदेवान्तरिक्षम्[1] । एष ह वा अन्तरिक्ष[1]नाम[5] ॥२॥ एष उ एवैष विततः तद्यथा काष्ठेन पलाशे विष्कब्धे स्यातामक्षेण वा चक्रावेवमे[6]ते[7]नेमौ लोकौ विष्कब्धौ ॥३॥ तस्मिन्निदं सर्वमन्तः । त[8]द्यदस्मिन्निदं सर्वमन्तस्तस्मादन्तर्यक्षम् । अन्तर्यक्षं[9] ह वै नामैतत् । तदन्तरिक्ष[1]मिति परोक्षमाचक्षते ॥४॥ तद्यथा मूताः प्रबद्धाः[10] प्रलम्बेरन्नेवं हैतस्मिन्सर्वे लोकाः प्रबद्धाः प्रलम्बन्ते ॥५॥ तस्यैतस्य साम्न[11]स्तिस्र आगा[12]स्त्रीण्यागीतानि पङ्क्तिभूतयश्चतस्रः प्रतिष्ठा दश प्रगास्सप्त संस्था द्वौ स्तोभावेकं रूपम्[13] ॥६॥ तद्यास्तिस्र आगा इम एव ते[14] लोकाः ॥७॥ अथ यानि (त्रीण्यु) आगीतान्यग्निर्वायुरसा

---

५–अस्। ६ आवृच्योते ।

१–रीक्ष–। २ अधिक है 'एष ह वा अन्तरीक्षम् । ३ पवम् । ४ नास्ति । ५–क्षौना–। ६ नवम् । ७ एतैँन । ८ नास्ति । तद्.......... अन्तस् । ९ नास्ति । १०–बन्द–। ११–नंस् । १२ अगामाः । १३ एक–रैपम्, एकरूपम् । १४ तो ।

वादित्य एतान्यागीतानि । न ह वै कांचनश्रियमपराप्नोति य एवं वेद ॥८॥ १।२०॥

षष्ठेऽनुवाके प्रथमः खण्डः ।

अथ याष्षड्विभूतय ऋतवस्ते ॥१॥ अथ याश्चतस्रः प्रतिष्ठा इमा एव ताश्चतस्रोदिशः ॥२॥ अथ ये दश प्रग्रा इम एव ते दश प्राणाः ॥३॥ अथ यास्सप्त संस्था या एवैतास्सप्ताहोरात्राः प्राचीर्वषट्कुर्वन्ति ता एव ताः ॥४॥ अथ यौ द्वौ स्तोभावहोरात्रे एव ते ॥५॥ अथ यदेकंरूपं कर्मैव तत् । कर्मणा हीदं सर्वं विक्रियते ॥६॥ तस्यैतस्य साम्नोदेवा आजिमायन् । स प्रजापतिर्हिरस्सा हिङ्कारमुदजयदग्निस्तेजसा प्रस्तावं रूपेण बृहस्पतिरुद्गीथं स्वधया पितरः प्रतिहारं वीर्येणेन्द्रोनिधनम् ॥७॥ अथेतरे देवा अन्तरिता इवासन् । त इन्द्रमब्रुवन् तव वै वयं स्मोऽनुव एतस्मिन् सामन्ना-भजेति॥८॥ तेभ्यस्स्वरम्प्रायच्छत् । तम्प्रजापतिरब्रवीत्कथेत्थमकः । सर्वं वा एभ्यस्साम प्रादाः । एतावद्वाव साम यावान् स्वरः ऋग्वा एषर्ते स्वराद्भवतीति ॥९॥ सोऽब्रवीत् पुनर्वाअहमेषामेतं रसमादा-स्य इति । तानब्रवीऽदुप मा गायत । अभि मा स्वरतेति । तथेति

१ नास्ति । सप्त ········ एतास् । २—म्रा । ३ वर्ष— । ४ वद् । ५ दैर्पि । ६—सं । ७ तावच । ८—रम । ९ सवर्— । १० एषो, एषोमे ।

॥१०॥ तमुपागायन् । तमभ्यस्वरन् । तेषाम्पुनारसमादत्त ॥११॥ १।२१॥

षष्ठेऽनुवाके द्वितीयः खण्डः ।

स यथा मधुधाते[1] मधुनाळीभिर्मध्वासिञ्चादेवमेव तत्साम-न्पुना रसमासिञ्चत् ॥१॥ तस्मादु ह नोऽपगायेत् । इन्द्र एष यदुद्गाता । स यथा सात्वमीषां[2] रसमादत्त एवमेष तेषां रसमादत्ते ॥२॥ कामं ह तु यजमान उपगायेद्यजमानस्य हि तद्भवत्यथो ब्रह्म-चार्याचार्योक्तः ॥३॥ तदु वा आहुस्सैव गायेत् । दिशो ह्युपागा-यन्[3] दिशामेवं[4] सलोकतां जयतीति ॥४॥ ते म एवेमे[5][6] मुख्याः प्राणा एत एवोद्गातारश्चोऽपगातारश्च । इमे ह त्रय उद्गातार इम उ चत्वार उपगातारः ॥५॥ तस्मादु चतुर एवोऽपगातॄन्[7] कुर्वीत। तस्मादुहोऽपगातॄन्[8] प्रत्यभिमृशेद्दिशस्स्थश्रोत्रं मे माहिंसिष्टेति ॥६॥ स यस्स रस आसीद्य एवायम्पवत एष एव स रसः ॥७॥ स यथा मध्वालोपमद्यादिति ह स्माह सुचित्तश्शैलन एवमेतस्य रसस्यात्मान-म्पूरयेत् । स एवोद्गातात्मानंच यजमानं चामृतत्वं गमयतीति ॥८॥ १।२२

षष्ठेऽनुवाके तृतीयः खण्डः । षष्ठोऽनुवाकस्समाप्तः ।

———:०:———

११—त्ता ।

१—धुवने । २ 'स' अधिक पढ़ो । ३—यत् । ४—शम । ५ एवं । ६ म । ७ ऽद्गा—,—तृन् । ८—तृन् ।

अयमेवेदमग्र आकाश आसीत् । स उ एवाप्येतर्हि ॥१॥ स यस्स आकाशो वागेव सा । तस्मादाकाशाद्वाग्वदति ॥२॥ तामेतां[1] वाचम्प्रजापतिरभ्यपीळयत् । तस्या अभिपीळितायै रसः[2] प्राणेदत्[3] । त एवेमे लोका अभवन् ॥३॥ स इमाँ[4] लोकानभ्यपीळयत् । तेषामभिपीळितानां रसः प्राणेदत् । ता एवैता देवता अभवन्नाग्नि-र्वायुरसावादित्य[5] इति ॥४॥ स एता देवता अभ्यपीळयत् । तासामभिपीळितानां रसः प्राणेदत् । सा त्रयीविद्याभवत् ॥५॥ स[6] त्रयीं विद्यामभ्यपीळयत् । तस्या अभिपीळितायै रसः प्राणेदत् । ता एवैता व्याहृतयोऽभवन् भूर्भुवस्स्वरिति ॥६॥ स एता व्याहृतीरभ्यपीळयत् । तासामभिपीळितानां रसः प्राणेदत् । तदेतद-क्षरमभवदोमिति यदेतद् ॥७॥ स एतदक्षरमभ्यपीळयत् । तस्या-ऽभिपीळितस्य[7] रसः प्राणेदत् ॥८॥ १।२३॥

सप्तमेऽनुवाके प्रथमः खण्डः ।

तदक्षरदेव । यदक्षरदेव तस्मादक्षरम् ॥१॥ यद्वेवाक्षरं[1] ना-क्षीयत तस्मादक्षयम् । अक्षयं ह वै नामैतत् । तदक्षरमिति

---

१. एता वा । २. रसम् । ३. 'स त्रयीम्.........रसम् (!) प्राणेदत्' अधिक है । ४. नास्ति । ५–आ । ६ नास्ति । स त्रयीम् .........प्राणेदत् । ७–आ ।

१–वा ।

परोक्षमाचक्षते ॥२॥ तद्धैतदेक ओमिति गायन्ति । तत्तथा न गायेत । ईश्वरो हैनदेतेन रसेनान्तर्धातोः[2] । अथो[3] द्वे[4] इवैवम्भवत ओमिति । ओ इत्यु हैके गायन्ति । तदु ह[5] तन्न[6] गीतम् । नैव[7] तथा गायेत् । ओं[8] इत्येव गायेत् । तदेनदेतेन रसेन सन्दधाति ॥३॥ तदेतं रसं तर्पयति । रसस्तृप्तोऽक्षरं तर्पयति । अक्षरं[9] तृप्तं व्याहृती स्तर्पयाति । व्याहृतयस्तृप्तावेदाँस्तर्पयन्ति । वेदास्तृप्ता देवतास्तर्पयन्ति । देवतास्तृप्ता लोकाँस्तर्पयन्ति। लोकास्तृप्ता अक्षरं तर्पयन्ति। अक्षरं तृप्तं वाचं तपर्यति[10] । वाक्[11] तृप्ताकाशं तर्पयति । आकाशस्तृप्तः प्रजास्तर्पयाति । तृप्यति प्रजया पशुभिर्य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायाति[12] ॥४॥ १।२४॥

सप्तमेऽनुवाके द्वितीयः खण्डः । सप्तमोऽनुवाकस्समाप्तः ।

——:०:——

अयमेवेदमग्र[1] आकाश आसीत् स उ एवाप्येतर्हि ॥१॥ स यस्स आकाश आदित्य एव स । एतस्मिन् (ह्) उदिते[2] सर्वमिदमाकाशते ॥२॥ तस्य मर्त्यामृतयोर्वै[3] तीराणि[4] समुद्र एव ।

---

२ या–। ३–थे । ४ द्वै, द्वै । ५ नास्ति । ६ नि–। ७ ने एव । ८ ओ । ९ अक्षरं ........ वाचं तर्पयति यह पाठ नहीं । १०–यन्ति । ११ वाकस । १२ गायत ।

१ दव् (!) । २ सुदिते । ३ वैर्वे । ४ तरणी ।

तद्यत्समुद्रेण परिगृहीतं[5] तन्मृत्योराप्तमथ यत्परं तदमृतम् ॥३॥ स
यो ह स समुद्रो य एवायम्पवत एष एव स समुद्रः । एतं हि
संद्रवन्तं[6] सर्वाणि भूतान्यनुसंद्रवन्ति[7] ॥४॥ तस्य[8] द्यावापृथिवी एव
रोधसी । अथ यथा नद्यां[9] कंसानि[10] वा प्रहीणानि[11] स्युस्सरांसि वै-
व[12] मस्यायम्पार्थिवस्समुद्रः ॥५॥ स एष पार एव समुद्रस्योदेति ।
स उद्यन्नेव वायोः पृष्ठ आक्रमते । सोऽमृतादेवोदेति । अमृतमनु-
संचरति । अमृते प्रतिष्ठितः[13] ॥६॥ तस्यैतत् त्रिवृद्रूपम्मृत्योरनाप्तं शुक्लं
कृष्णम्पुरुषः ॥७॥ तद्यच्छुक्लं तद्वाचो रूपमृचोऽग्नेर्मृत्योः । सा या
सा वाग्[14]ऋक्[15] सा । अथ योऽग्निर्मृत्युस्सः ॥८॥ अथ यत्कृष्णं तदपां
रूपमन्नस्य[16] मनसो यजुषः । तद्यास्ता[17] आपोऽन्नं तत् । अथ यन्मनो
यजुष्टत् ॥९॥ अथ यः पुरुषस्स प्राणस्तत्साम तद्ब्रह्म तदमृतम् ।
स यः प्राणस्तत्साम । अथ यद्ब्रह्म तदमृतम् ॥१०॥ १।२५॥

अष्टमेऽनुवाके प्रथमः खण्डः ।

अथाध्यात्मम् । इदमेव चक्षुस्त्रिवृच्छुक्लं कृष्णम्पुरुषः ॥१॥
तद्यच्छुक्लं तद्वाचो रूपमृचोऽग्नेर्मृत्योः । सा या सा वाग्[1]ऋक्[2] सा ।

---

५–गृह्य– । ६–द्रे– । ७ अनुद्र– । ८–या । ९–याम् । १० कसा-
नि । ११ प्रहीणाहीनि । १२ अधिक है 'सस्'. स । १३ प्रतितिष्ठतः ।
१४ वाक्, वाग् । १५ ऋत् । १६ अन्नमस्य । १७ नास्ति, तद्याः–यः
पुरुषस् ॥ १ गृत् । २ अधिक 'ऽक्सा'।

अथ योऽग्निर्मृत्युस्सः ॥२॥ अथ यत्कृष्णं तदपां रूपमन्नस्य मनसो यजुषः[3] । तद्यास्ता आपोऽन्नं तत् । अथ यन्मनो यजुष्टत् ॥३॥ अथ यः[4] पुरुषस्स प्राणस्तत्साम तद्ब्रह्म तदमृतम् । स यः प्राणस्तत्साम । अथ यद्ब्रह्म तदमृतम् ॥४॥ सैऽषोऽत्क्रान्तिर्ब्रह्मणः । अथातः पराक्रान्तिः ॥५॥ सा या साऽऽक्रान्तिर्[5]विद्युदेव सा । स यदेव विद्युतो विद्योतमानायै श्येतं[6] रूपम्भवति तद्वाचो रूपमृचो-ऽग्नेर्मृत्योः ॥६॥ यद्वेव विद्युतस्संद्रवन्त्यै नीलं[7] रूपम्भवति तदपां रूपमन्नस्य मनसो यजुषः[8] ॥७॥ य एवैष विद्युति पुरुषस्स प्राण-स्तत्साम तद्ब्रह्म तदमृतम् । स यः प्राणस्तत्साम[9] । अथ यद्ब्रह्म तदमृतम् ॥८॥ १।२६॥

अष्टमेऽनुवाके द्वितीयः खण्डः ।

स हैषोऽमृतेन परिवृढो मृत्युमध्यास्तेऽन्नं कृत्वा ॥१॥ अथै-ऽष एव पुरुषो योऽयं चक्षुषि[1] । य आदित्ये[2] सोऽतिपुरुषः । यो विद्युति स परमपुरुषः ॥२॥ एते ह वाव[3] त्रयः पुरुषाः । आ ह्यस्यैते जायन्ते ॥३॥ स योऽयं चक्षुष्येषोऽनुरूपो नाम । अन्वङ्[4] ह्येष[5]

---

३—षो । स्र (!) । ४—त् । ५ नास्ति । ६ श्वेतं । ७—ल्—। ८—वे । ९—मा ।

१—सी । २—यो । ३—षो,—षा,—ष । ४—वज । ५ ह्य ।

सर्वाणि रूपाणि । तमनुरूप इत्युपासीत । अन्वञ्चि[6] हैनं[7] सर्वाणि रूपाणि भवन्ति ॥४॥ य आदर्शे स प्रतिरूपः । प्रत्यङ् ह्येष सर्वाणि रूपाणि । तम्प्रतिरूप[8] इत्युपासीत । प्रत्यञ्चि हैनं सर्वाणि रूपाणि भवन्ति ॥५॥ यो विद्युति स सर्वरूपः । सर्वाणि[9] ह्येतस्मिन् रूपाणि । तं[10] सर्वरूप इत्युपासीत । सर्वाणि हाऽस्मिन् रूपाणि[10] भवन्ति ॥६॥ एते ह वाव त्रयः पुरुषाः । आ हाऽस्यैते जायन्ते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ॥७॥ १।२७॥

अष्टमेऽनुवाके तृतीयः खण्डः । अष्टमोऽनुवाकस्समाप्तः ।

———:०:———

अयमेवेदमग्र आकाश आसीत् । स उ एवाप्येतर्हि ॥१॥ स यस्स आकाश इन्द्र एव सः । स यस्स इन्द्र एष एव स य एष[1] एव तपति । स एष सप्तरश्मिर्वृषभस्तुविष्मान् ॥२॥ तस्य वाङ्मयो रश्मिः प्राङ् प्रतिष्ठितः । सा या सा वागग्निस्सः । स दशधा भवति शतधा सहस्रधाऽयुतधा प्रयुतधा नियुतधाऽर्बुदधा[2] न्यर्बुदधा निखर्वधा[3] पद्ममक्षितिर्[4]व्योमान्[5]तः ॥ ३ ॥ स एष एतस्य रश्मिर्वा-

६—वञ्ची,-वञ्वी,-वं । ७ ह्येनम् । ८ प्रत्यं । ९ अधिक है 'रूपाणि;' नास्ति—तं ......... रूपाणि ।

१ नास्ति । २ अर्—। ३ निखर्वाचं । ४—ति । ५—त, स्तोम—।

र्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च वदत्येतस्यैव[६] रश्मिना वदति[७] ॥४॥ अथ[८] मनोमयो दक्षिणा[९] प्रतिष्ठितः । तद्य-त्तन्मनश्चन्द्रमास्सः[१०] । स दशधा भवति ॥५॥ स एष एतस्य रश्मिर्मनो भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च मनुत एतस्यैव रश्मिना मनुते ॥६॥ अथ चक्षुर्मयः[११] प्रत्यङ्[१२] प्रतिष्ठितः[१३] । तद्यत्तच्चक्षु-[१४]रादित्यस्सः । स दशधा भवति ॥७॥ स एष एतस्य रश्मिश्चक्षु-र्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च पश्यत्येतस्यैव रश्मिना पश्यति ॥८॥ अथ श्रोत्रमय उदङ्प्रतिष्ठितः[१५] । तद्यत्तच्छ्रोत्रं दिशस्ताः । स दशधा भवति ॥९॥ स एष एतस्य रश्मिश्श्रोत्र-म्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च शृणोत्येतस्यैव रश्मिना शृणोति ॥१०॥ १।२८॥

नवमेऽनुवाके प्रथमः खण्डः ।

अथ प्राणमय ऊर्ध्वः प्रतिष्ठितः[१] । स यस्स प्राणो वायुस्सः । स[२] दशधाभवति ॥१॥ स एष एतस्य रश्मिः प्राणोभूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्च प्राणित्येतस्यैव रश्मिना प्राणिति

६ पश्यति । ७ पश्यति । ८ नास्ति । ९ दक्षिणा । १० मन्वश् । ११ चक्षुम– । १२–य । १३ वस्थितः । १४ त, नास्ति । १५ प्रत्यवस्थितः ॥

१–स्थ– । २ नास्ति ।

॥२॥ अथाऽसुमयस्तिर्यङ् प्रतिष्ठितः । स ह[3] स ईशानो नाम । स दशधा भवति[4] ॥३॥ स एष एतस्य रश्मिरसुर्भूत्वा सर्वास्वासु प्रजासु प्रत्यवस्थितः । स यः कश्चाऽसुमानेतस्यैव रश्मिनाऽसुमान् ॥४॥ अथाऽन्नमयोऽर्वाङ् प्रतिष्ठितः । तद्य[5]त्तदन्न[6]मापस्ताः[7] । स दशधा भवति शतधा सहस्रधाऽयुतधा प्रयुतधा नियुतधाऽर्बुदधान्यर्बुदधा निखर्व[8]धा पद्ममक्षितिर्व्योमान्[9]तः ॥५॥ स एष एतस्य रश्मिरन्नम्भूत्वा सर्वास्वासु[10] प्रजासु प्रत्यवस्थितः । स यः कश्चाश्नात्येतस्यैव रश्मिनाश्नाति ॥६॥ स एष सप्तरश्मिर्वृषभस्तुविष्मान् । तदेत[11]दृचाऽभ्युनूच्यते

**यस्सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्तसिन्धून् । यो रौहि[12]णमस्फुरद्वज्रबाहुर्द्या[13]मारोहन्तं[14] स जनास इंद्र इति**

॥७॥ यस्सप्तरश्मिरिति । सप्त ह्येत आदित्यस्य रश्मयः । वृषभ इति । एष ह्येवाऽऽसाम्प्रजानामृषभः । तुविष्मानिति । महीयै[15]ऽवास्यैषा ॥८॥ अवासृजत् सर्तवे सप्तसिन्धूनिति । सप्त ह्येते सिन्धवः ।

---

३ स्थान खाली है 'स……ई' । ४-वन्ति । ५ 'यत्' के पश्चात् 'तत्खलुदं नाम' पाठ है, 'तदन्नम……स' नहीं है । ६ अँदन्नम । ७ तेदा, स्त । ८ निखर्वाच्चम, निखर्वधाच । ९ वे म- । १० सामास्व् ११ नास्ति तदेतद्……वृषभस्तुविष्मान् । १२ रोह- । १३-द्र । १४-त । १५ मह्यै ।

तैरिदं सर्वं सितम् । तद्यदेतैरिदं सर्वं सितं तस्मात्सिन्धवः ॥९॥ यो रौहिणमस्फुरद्वज्रबाहुरिति । एष (हि) रौहिणमस्फुरद्वज्रबाहुः ॥१०॥ द्यामारोहन्तं[१६] स जनास इन्द्र इति । एष हीन्द्रः ॥११॥ ।१२९॥

नवमेऽनुवाके द्वितीयः खण्डः।

तद्यथा गिरिम्पन्थानस्समुदियुरिति हस्माऽऽह शाट्यायनि-रेवमेत आदित्यस्य रश्मय एतमादित्यं[१] सर्वतोऽपियन्ति[२] । स हैवं विद्वानोमित्याददान एतैरेतस्य रश्मिभिरेतमादित्यं सर्वतोऽप्येति॥१॥ तदेतत् सर्वतो द्वारमनिषेधं[३] साम । अन्यतोद्वारं[४] हैऽनदेक[५][६] एवा-[७]ऽभ्रङ्गमुपासते[८] । अतोऽन्यथा[९]विद्युः[१०] ॥२॥ अथ य एतदेवं वेद स एवैतत् सर्वतो द्वारमनिषेधं सामवेद ॥३॥ सा एषा विद्युत् । (यद्) एतन्मण्डलं समन्तम्परिपताति तत्साम । अथ यत्परमतिभाति स पुण्यकृत्यायै रसः । तमभ्यातिमुच्यते ॥४॥ तदेतदभ्रातृव्यं[११] साम । न ह वा इन्द्रः कंचन भ्रातृव्यम्पश्यते । स यथेन्द्रो न कंचन भ्रातृव्यम्पश्यत एवमेव न कंचन भ्रातृव्यम्पश्यते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ॥५॥ ।१३०॥

नवमेऽनुवाके तृतीयः खण्डः। नवमोऽनुवाकस्समाप्तः ।

——:०:——

१६ स्थान खाली है—हन्–वाळा,–हत्तं ।

१ एवम् । २ तिप्रतिवियन्ति । ३ अनुष्– । ४ नास्ति । ५ नत, त । ६ नास्ति । ७ एताव, एता । ८ गम्… । ९ एतो । १० विदुः । ११–त्रुर्वि ॥

अयमेवेदमग्र आकाश आसीत् । स उ एवाऽप्येतर्हि । स यस्स आकाश इन्द्र एव सः । स यस्स इन्द्रस्सामैवतत् ॥१॥ तस्यै-तस्य साम्न इयमेव प्राचीदिग्घिङ्कार[1] इयम्प्रस्ताव इयमादिरियमुद्गी-थोऽसौ प्रतिहारोऽन्तरिक्ष[2]मुपद्रव इयमेवनिधनम् ॥२॥ तदेतत्सप्त[3]-विधं साम । स य एवमेतत्सप्तविधं साम वेद यत्किञ्च प्राच्यांदिशि या[4] देवता ये मनुष्या ये पशवो यदन्नाद्यं तत्सर्वं[5] हिङ्कारेणाप्नोति[6] ॥३॥ अथ यद्दक्षिणायां दिशि तत्सर्वं प्रस्तावेनाप्नोति ॥ ४ ॥ अथ यत्प्रतीच्यां[7] दिशि तत्सर्वमादिनाप्नोति ॥५॥ अथ यदुदीच्यांदिशि तत्सर्वमुद्गीथेनाप्नोति ॥६॥ अथ यदमुष्यां[8] दिशि तत्सर्वम्प्रतिहारेणा-प्नोति ॥७॥ अथ यदन्तरिक्षे[2] तत्सर्वमुपद्रवेणाप्नोति ॥८॥ अथ यदस्यां दिशि या देवता ये मनुष्या ये पशवो यदन्नाद्यं तत्सर्वं निधनेनाप्नोति ॥९॥ सर्वं हैवाऽस्याऽऽप्तम्भवति सर्वं जितं न हा-ऽस्य कश्चन कामोऽनाप्तो भवति य एवं वेद ॥१०॥ स यद्धकिञ्च किञ्चैवं विद्वानेषु लोकेषु कुरुते स्वस्य हैव तत्स्वतः कुरुते । तदे-तदृचाऽभ्यनूच्यते ॥११॥ ११३१॥

दशमेऽनुवाके प्रथमः खण्डः ।

---

१ दीर् । २–ईक्ष् । ३ पत् । ४ 'मनुष्या' अधिक है । ५–वा । ६ यहां चौथा श्लोक (मन्त्र) अधिक है और साथ ही प्रतिहारेण 'प्रस्तावेन' के स्थान में । ७ 'अव्यात्' अधिक है । ८ 'दक्षिणायांदिशि' ॥

यद् द्याव इन्द्र ते शतं[1] शतम्भूमीरुत स्युः । न त्वा वज्रिन्त्सहस्रं सूर्या[2] अनु न[3] जातमष्ट रोदसी इति ॥१॥

यद् द्याव इन्द्र ते शतं शतम्भूमीरुतस्युरिति । यच्छतं द्यावस्स्युश्शतम्भूम्यस्ताभ्य एष एवाऽऽकाशो ज्यायान्[4] ॥२॥ न त्वा वज्रिन्त्सहस्रं सूर्या अन्विति । न ह्येतं सहस्रं चन सूर्या अनु ॥३॥ न[5] जातमष्ट रोदसी इति । न ह्येतं जातं रोदन्ति । इमे ह वाव रोदसी ताभ्यामेष एवाकाशो ज्यायान् । एतस्मिन् ह्येवैते अन्तः ॥४॥ स यस्स आकाश इन्द्र एव सः । स[5] यस्स इन्द्र एष एव स य एष तपति ॥५॥ स एषोऽ[6]भ्रारयतिमुच्यमान[7] एति । तद्यथैषो[6]ऽभ्रारयतिमुच्यमान एवमेव स सर्वस्मात्पाप्मनोऽतिमुच्यमान एति य एवं वेदाथो यस्यैवं विद्वानुद्गायति ॥६॥ १।३२॥

दशमेऽनुवाके द्वितीयः खण्डः । दशमोऽनुवाकस्समाप्तः ।

---:o:---

त्रिवृत्साम चतुष्पात् । ब्रह्म तृतीयमिन्द्रस्तृतीय[1]म्प्रजापति[1]स्तृतीयमन्नमेव चतुर्थः पादः ॥१॥ तद्यद्वै ब्रह्म स प्राणोऽथ य इन्द्र-

---

१ नास्ति । २—र्यां । ३ नास्ति । ४—यन् । ५ नास्ति, स—स । ६ स्थान खाली 'ग्र' तक । ७—मानय,—यमानय ॥

१त्रित्—

स्सा वागथ यः प्रजापतिस्तन्मनोऽन्नमेवं चतुर्थः पादः ॥२॥ मन एव हिङ्कारो वाक्प्रस्तावः प्राण उद्गीथोऽन्नमेव चतुर्थः पादः ॥३॥ करोत्येव वाचा नयति प्राणेन गमयाति मनसा। तदेतन्निरुद्धं यन्मनः। तेन यत्र कामयते तदात्मानं च यजमानं च दधाति ॥४॥ अथाधिदैवतम्[२]। चन्द्रमा एव हिङ्कारोऽग्निः प्रस्ताव आदित्य उद्गीथ आप एव चतुर्थः[३] पादः। तद्धि प्रसत्तमन्नम् ॥५॥ ता वा[४] एता देवता अमावास्यां रात्रिं संयन्ति। चन्द्रमा अमावास्यां रात्रिमादित्यम्प्रविशत्यादित्योऽग्निम् ॥ ६ ॥ तद्यत्संयन्ति[५] तस्मात्साम । स ह वै सामवित्स साम वेद य एवं वेद ॥७॥ तासां वा एतासां देवतानामेकैकैव देवता साम भवति ॥८॥ एष एवादित्यस्त्रिवृच्चतुष्पाद्रश्मयो मण्डलम्पुरुषः। रश्मय एव हिङ्कारः। तस्मात्ते प्रथमत एवोद्यतस्तायन्ते। मण्डलम्प्रस्तावः पुरुष उद्गीथो या एता आपोऽन्तस्स एव चतुर्थः पादः ॥९॥ एवमेव चन्द्रमसो रश्मयो मण्डलम्पुरुषः। रश्मय एव हिङ्कारो मण्डलम्प्रस्तावः पुरुष उद्गीथो या एता आपोऽन्त[६]स्स एव चतुर्थः पादः ॥१०॥ चत्वार्यन्यानि चत्वार्यन्यानि। तान्यष्टौ[७]। अष्टाक्षरा गायत्री[८] गायत्रं साम ब्रह्म उ गायत्री। तदु ब्रह्माऽभिसम्पद्यते। अष्टाशफाः पशवस्तेनोपशव्यम् ॥११॥ २।३३ ॥

एकादशोऽनुवाके प्रथमः खण्डः।

---

२—दैवत—। ३—अम। ४—मा। ५ सय्—। ६—थं। ७ नास्ति। ८ वद्र। ९—भी, यं॥

अथाऽध्यात्मम् । इदमेव चक्षुस्त्रिवृच्चतुष्पाच्छुक्लं कृष्णम्पुरुषः । शुक्लमेव हिङ्कारः कृष्णम्प्रस्तावः पुरुष उद्गीथो या इमा आपोऽन्तस्स एव चतुर्थः पादः ॥१॥ इदमादित्यस्यायनमिदं चन्द्रमसः । चत्वारीमानि चत्वारीमानि । तान्यष्टौ । अष्टाक्षरा गायत्री । गायत्रं साम ब्रह्म उ गायत्री । तदु ब्रह्माभिसम्पद्यते[1] । अष्टाशफाः पशवस्तेनो पशव्यम् ॥२॥ स यो ऽयम्पवते स[2] एष एव[2] प्रजापतिः । तद्धैव साम । तस्यायं देवो योऽयं चक्षुषि पुरुषः । स एष आहुतिमतिमत्योत्क्रान्तः ॥३॥ अथ यावेतौ चन्द्रमाश्चादित्यश्च यावेतावप्सु दृश्येते[3] एतावेतयोर्देवौ[4] ॥४॥ यद्ध वा इदमाहुर्देवानां देवा इत्येते ह ते । त एत आहुतिमतिमत्योत्क्रान्ताः ॥५॥ तद्ध पृथुर्वैन्यो दिव्यान्व्रात्यान्[5]पप्रच्छ येभिर्वात[6] इषितः प्रवाति ये ददन्ते पञ्च दिशस्समीचीः[7] । य आहुतीरत्यमन्यन्त[8] देवा[9] अपां[10] नेतारः कतम त आसन्निति ॥६॥ ते ह प्रत्यूचु रिमामेषाम्पृथिवीं वस्त एको-ऽन्तरिक्षम्पर्येको[11] बभूव । दिवमेको ददते यो विधर्ता[12] विश्वा आशाः प्रतिरक्षन्त्यन्य[13] इति ॥७॥ इमामेषाम्पृथिवीं

१–पाद्–। २ नास्ति । ३–यते । ४ एता उ । ५ तान् । ६ पभिर् । ७ वशास्, वशा । ८–हंर् । ९ इत्यम–। १० पराहृ । ११–र्यंच्–। १२–धत्ता । १३ अन्य् ।

वत्त एक इत्यग्निर्हसः ॥८॥ अन्तरिक्षम्पर्येको बभूवेति वायुर्ह सः॥९॥
दिवमेको ददते यो विधर्ताऽस्यादित्यो ह सः ॥१०॥ विश्वा आशाः
प्रतिरक्षन्त्यन्य इति । एता ह वै देवता विश्वा आशाः प्रतिरक्षन्ति
चन्द्रमा नक्षत्राणीति । ता एतास्सामैव सतो व्यूढोऽन्नाद्याय ॥११॥
१ । ३४ ॥

एकादशोऽनुवाके द्वितीयः खण्डः । एकादशोऽनुवाकस्समाप्तः ।

:०:

अथैतत्साम । तदाहुस्संवत्सर एव सामेति ॥१॥ तस्य वसन्त
एव हिङ्कारः । तस्मात्पशवो वसन्ता हिङ्करिक्रतस्समुदायन्ति ॥२॥
ग्रीष्मः प्रस्तावः । अनिरुक्तो वै प्रस्तावोऽनिरुक्त ऋतूनां ग्रीष्मः
॥३॥ वर्षा उद्गीथः । उदिव वै वर्षं गायति ॥४॥ शरत्प्रतिहारः।
शरादि ह खलु वै भूयिष्ठा ओषधयः पच्यन्ते ॥५॥ हेमन्तो निधनम् ।
निधनकृता इव वै हेमन्प्रजा भवन्ति ॥६॥ तावेतावन्तौ संधत्तः ।
एतदन्वनन्तस्संवत्सरः । तस्यैतावन्तौ यद्धेमन्तश्च वसन्तश्च । एतदनु
ग्रामस्यान्तौ समेतः । एतदनु निष्कस्यान्तौ समेतः । एतदन्वहिर्भो-
गान्पर्याहृत्यशये ॥७॥ तद्यथा ह वै निष्कस्संमन्तं ग्रीवा अभिपर्यक्त

---

१४ विधर्त्ते, विधत्ते । १५ अन्नू-, 'न्नू-'-याया ।

१-करिक्कुतस्,-करिक्रतस् । २ नास्ति । ३-तत् । ४ सवत्- ।
५ अभी- । ६-यत्तः ।

एवमनन्तं साम । स य एवमेतदनन्तं साम वेदानन्ततामेव[७] जयति ॥८॥ १।२५॥

द्वादशोऽनुवाके प्रथमः खण्डः ।

अथैतत्पर्जन्ये साम । तस्य पुरोवात एव हिङ्कारः । अथ यदभ्राणि सम्प्लावयति स प्रस्तावः । अथ यत् स्तनयति स उद्गीथः । अथ यद्विद्योतते स प्रतिहारः । अथ यद्वर्षति तन्निधनम् ॥१॥ तदेतत्पर्जन्ये साम । स य एवमेतत्पर्जन्ये साम वेद वर्षुको[१] हास्मै पर्जन्यो भवति ॥२॥ अथैतत् पुरुषे[२] साम । तस्यायमेव हिङ्कारोऽयम्प्रस्तावोऽयमुद्गीथोऽयम्प्रतिहार इदं निधनम् ॥३॥ तदेतत्पुरुषे साम । स य एवमेतत्पुरुषे साम वेदोऽऽर्ध्व एव प्रजया[३] पशुभिरारोहन्नेति ॥४॥ य उ एनत्प्रसग्वेद[४] ये प्रसञ्चो लोकास्ताञ्जयति । तस्यायमेव हिङ्कारोऽयम्प्रस्तावोऽयमुद्गीथो[५]ऽयम्प्रतिहार[५] इदं निधनम् । ये प्रसञ्चो लोकास्ताञ्जयति ॥५॥ य उ[६] एनात्तिर्यग्वेद ये तिर्यञ्चो[७] लोका[८]स्ताञ्जयति । तस्य लोमैव हिङ्कारस्त्वक्प्रस्तावो मांसमुद्गीथोऽस्थि प्रतिहारो मज्जानिधनम् ॥६॥ तस्य त्रीण्यावि[९]र्गायति प्रस्तावम्प्रतिहारं

---

७ ऽनन्ताम् ।

१–र्षक– । २–षो । ३ प्रजा । ४–नं । ५ नास्ति । ६ एन, एनं । ७–ञ्चस्–, ‘म’ अधिक है । ८ लाक्– । ९ हिंकारं ॥

निधनम् । तस्मात्पुरुषस्य श्रोण्यस्थीन्याविर्दन्ताश्च द्वयाश्चनखाः । ये तिर्यञ्चो लोकास्ताञ्जयति ॥७॥ य उ एनत्संयग्वेद ये सम्यञ्चो लोकास्ताञ्जयति । तस्य मन एव हिङ्कारो वाक्प्रस्तावः प्राण उद्गीथश्चक्षुः प्रतिहार श्श्रोत्रं निधनम् । ये सम्यञ्चो लोकास्ताञ्जाति ॥८॥ अथैतद्देवतासु साम । तस्य वायुरेव हिङ्कारोऽग्निः प्रस्ताव आदित्य उद्गीथश्चन्द्रमा प्रतिहारो दिश एव निधनम् ॥९॥ तदेतद्देवतासु साम । स य एवमेतदेवतासु साम वेद देवतानामेव सलोकतां जयति ॥१०॥ १।३६॥

द्वादशेऽनुवाके द्वितीयः खण्डः ।

तस्यैतास्तिस्र आगा आग्नेय्यैकैन्द्र्येका[1][2] वैश्वदेव्येका ॥१॥ सा या मन्द्रा साऽऽग्नेयी[3][4] । तया प्रातस्सवनस्योद्गेयम् । आग्नेयं वै प्रातस्सवनमाग्नेयोऽयं लोकः। स्वयाऽऽगया प्रातस्सवनस्योऽद्गायत्यृध्नोतीमं लोकम् ॥२॥ अथ[5] या घोषिण्युपब्दिमती[6] सैऽऽन्द्री । तया माध्यन्दिनस्य[7] सवनस्योद्गेयम् । ऐन्द्रं वै माध्यन्दिनं सवन मैन्द्रोऽसौ लोकः । स्वयाऽऽगया माध्यन्दिनस्य सवनस्योद्गायत्यृध्नोत्यमुंलोकम्[8] ॥३॥ अथ यां[9] वीङ्ख्यन्निव प्रथयन्निव गायति सा वैश्वदेवी । तया

---

१ येक्-। २ ऽऽन्द्र । ३ नास्ति, सा..........ऽद्र । ४ मँनथी । ५ नास्ति अथ..........लोकम् । ६-अब्दी-के लिये स्थान खाली है। ७-न्दिन । ८-तिऽमं । ९ या, 'घोषिण्यु', भी लिखा है ।

तृतीयसवनस्योद्गेयम । वैश्वदेवं वै तृतीयसवनं वैश्वदेवोऽयमन्तरा-
लोकः । स्वयाऽऽगया तृतीयसवनस्योद्गायत्यृध्नोतीममन्तरालोकम्[10]
॥४॥ अथो उच्चा खल्वाहु रेकयैवाऽऽगयोद्गेयं यदेवास्य मध्यं वाच
इति । तद्यया वै वाचा न्यायच्छमान उद्गायति तदेवास्यमध्यं वाचः ।
तया[11] वा एतया वाचा सर्वा वाच उपगच्छति । अभ्यासिक्तामेकस्थां
श्रियमृध्नोति य एवं वेद ॥५॥ अथ या क्रौञ्चा सा बार्हस्पत्या । स
यो ब्रह्मवर्चसकामस्स्यात्स[12] तयोद्गायेत् । तद्ब्रह्म वै बृहस्पतिः । तद्वै
ब्रह्मवर्चसमृध्नोति तथा ह ब्रह्मवर्चसीभवति ॥६॥ अथ ह चैकिता-
नेय एकस्यैव साम्न आगां गायति गायत्रस्यैव । तदनवानं गेयम्[13] ।
तत्[14] साम्न एवा प्रतिहारादनवानं गेयम् । तत्प्राणो वै गायत्रम ।
तद्वै प्राणमृध्नोति । तथा ह सर्वमायुरेति ॥७॥ १।३७॥

द्वादशोऽनुवाके तृतीयः खण्डः ।

अथ ह ब्रह्मदत्तं[1] चैकितानेयमुद्गायन्तं कुरव उपोदुरुज्जहिहि[2]
साम दाल्भ्येऽति ॥१॥ स होऽपोद्यमानो नितरां जगौ । तं होचुः
किमुपोद्यमानो नितरामगासीरिति ॥२॥ स होवाचेदं वै लोमेऽस्मे[3]-

---

१०—यन्ति । ११ ताया । १२ स, नास्ति । १३ 'वै गायत्रम' नीचे से ले के अधिक लिखा है । १४ 'साम्नस्' अधिक है ॥

१ तम् । २ उज्जिह्वि । ३ सोमे ।

तदेवैतन्मृत्युपश्मशम[4]। तस्मादु ये न एतदुपावादिषुर्लोमशानी[5]व तेषां श्मशानानि भवितारः। अथ वयमुदेव[6] गातारस्स्म इति ॥३॥ अथ ह राजा जैवलिर्गल्नुनसमात्ती[7]कायणं शामूल पर्णाभ्यामुत्थितम्पप्रच्छर्चा[8]ऽऽगाता शालावत्या३ साम्ना३ इति ॥४॥ नैव राजन्नृचेति होवाच न साम्नेऽति। तद्यूयं तर्हि सर्व एव पर्णाप्या[9] भविष्यथ य एवं विद्वाँसोऽगायतेति ॥५॥ अथ यद्धाऽत्रर्च्यदृचा च साम्ना चाऽऽगामे[10]ति धीतेन वै तद्या तत्साम्नाऽमलाकाण्डेनाऽऽगातेऽति हैनाँस्तदवच्यत। तद्ध तदुवाच स्वरेण चैव हिङ्कारेण चाऽऽगामेति ॥६॥ १३८॥

द्वादशोऽनुवाके चतुर्थः खण्डः।

अथ ह सत्याधिवाकश्चैत्ररथिस्सत्ययज्ञम्पौलुषितमुवाच प्राचीनयोगेति मम[1] चेद्वै त्वं साम विद्वान् साम्नाऽऽर्त्विज्यं करिष्यसि नैव तर्हि पुनर्दीक्षामभिध्यातासीति। मुहुर्दीक्षी[2] बभूवास[3] ॥१॥ स होवाच यो वै साम्नश्श्रियं विद्वान्साम्नाऽऽर्त्विज्यं करोति श्रीमानेव भवति। मनो वाव साम्नश्श्रीरिति ॥२॥ यो वै साम्नः प्रतिष्ठां विद्वान्साम्नाऽऽर्त्विज्यं करोति प्रत्येव तिष्ठति। वाग्वाव साम्नः प्रतिष्ठेति ॥३॥

---

४-उपाश्र-। ५-षुल्। ६-तार। ७ गल्नूनसम, गुल्निनसम। ८-र्च। ९ पर्णाय्यौ। १० च आगमे॥

१ मच। २-क्षी। ३ भा।

यो वै साम्नस्सुवर्णं विद्वान् साम्नाऽऽर्त्विज्यं करोत्यध्यस्य गृहे[४] सुवर्णं गम्यते । प्राणो वाव साम्नस्सुवर्णमिति ॥४॥ यो वै साम्नो ऽपचितिं विद्वान्साम्नाऽऽर्त्विज्यं करोत्यपचितिमानेव भवति । चक्षु-र्वाव साम्नोऽपचितिरिति ॥५॥ यो वै साम्नश्श्रुतिं विद्वान्साम्ना-ऽऽर्त्विज्यं करोति श्रुतिमानेव भवति । श्रोत्रं वाव साम्नश्श्रुतिरिति ॥६॥ १।३६॥

द्वादशोऽनुवाके पञ्चमः खण्डः । द्वादशोऽनुवाकस्समाप्तः ।

:o:

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा[१] त्रीणि निहिता[२] नेऽङ्गयन्ति[३] तुरीयं वाचो मनुष्या वदन्तीऽति ॥ १ ॥

वागेव साम । वाचा हि साम गायति । वागेवोऽक्थम्[४] । वाचा ह्युक्थं शंसति । वागेव यजुः । वाचा हि[५] यजुरनुवर्तते ॥२॥ यत्कि-त्किचाऽर्वाचीनम्ब्रह्मणस्तद्वागेव सर्वम् । अथ यदन्यत्र ब्रह्मोपदिश्यते । नैव[६] हि तेनाऽऽर्त्विज्यं करोति । परोक्षेणैव[७] तु कृतम्भवति ॥३॥

४-ह्यो ।

१-ह्यानि । २-हितानी । ३ नास्ति । ४-क्-। ५ याचं । ६ ने । ७ नास्ति ।

तस्या एतस्यै वाचो मनः पादश्चक्षुः पादश्श्रोत्रम्पादो वागेव चतुर्थः[8] पादः[9] ॥४॥ तद्यद्वै मनसा ध्यायति तद्वाचा वदति। यच्चक्षुषा पश्यति तद्वाचा वदति। यच्छ्रोत्रेण श्र्णोति[10] तद्वाचा वदति ॥५॥ तद्यदे-तत्सर्वं वाचमेवाऽभिसमयति[11] तस्माद्वागेव साम। स ह वै सामवित्स साम वेद य एवं वेद ॥६॥ तस्या एतस्यै वाचः प्राणा[12] एवाऽसुः। एषु हीदं सर्वमसूतेति[13] ॥७॥ १।४०॥

त्रयोदशेऽनुवाके प्रथमः खण्डः।

तेन हैतेनाऽसुना[1] देवा जीवन्ति पितरो जीवन्ति मनुष्या जी-वन्ति पशवो जीवन्ति गन्धर्वाप्सरसो जीवन्ति सर्वमिदं जीवति ॥१॥ तदाहुर्यदसुनेदं[2][3] सर्वं[4] जीवति कस्साम्नोऽसुरिति। प्राण इति ब्रूयात्। प्राणो ह वाव साम्नोऽसुः ॥२॥ स एष प्राणो वाचि प्रतिष्ठितो वागु प्राणे प्रतिष्ठिता। तावेतावेवमन्योऽन्यस्मिन्प्रतिष्ठितौ[5]। प्रतितिष्ठति[6][7] य एवं वेद ॥३॥ तदेतदृचाऽभ्यनूच्यते—

---

८ 'चतुर्थः' अधिक है। ९ स्वाद्। १० शृणोति। ११ ऽहिसम–। १२–णा। १३ 'असूते' के परे 'एषु हीदं सर्वं सूतेऽति' सब में लिखा है (नास्ति 'ति) ॥

१–स्तीऽति। २ यदा। ३ येने। ४ 'इदं' अधिक है। ५–ये। ६ मन्यस्त–। ७ प्रतिष्ठितः।

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम् ॥ इति ॥४॥

अदितिर्द्यौरदितिरन्तरिक्षमिति । एषा वै द्यौरेषाऽन्तरिक्षम् ॥५॥ अदितिर्माता स पिता स पुत्र इति । एषा वै मातैषा पितैषा पुत्रः ॥६॥ विश्वेदेवा अदितिः पञ्चजना इति । येदेवा असुरेभ्यः पूर्वे पञ्चजना आसन् य एवासावादित्ये पुरुषो यश्चन्द्रमसि यो विद्युति योऽप्सु योऽयमक्ष्यन्तरेष एव ते । तदेषैव ॥७॥ अदितिर्जातमदितिर्जनित्वमिति । एषा ह्येव जातमेषा जनित्वम् ॥८॥१।५१॥

त्रयोदशोऽनुवाके द्वितीयः खण्डः । त्रयोदशोऽनुवाकस्समाप्तः ।

---

आरुणिर्ह वासिष्ठं चैकितानेयम्ब्रह्मचर्यमुपेयाय । तं होवाचाऽऽजानासि सौम्य गौतम यदिदं वयं चैकितानेयास्सामैवोपास्महे । कां त्वं देवतामुपास्स इति । सामैव भगवन्त इति होवाच ॥१॥ तं ह पप्रच्छ यदग्नौ तद्वेत्था३ इति । ज्योतिर्वा एतत्तस्य साम्नो यद्रूपं

८–रीक्स– । ९ नास्ति, अदितिर्माता ...... अदितिरन्तरिक्षम् ।
१०–चँ । ११–षो । १२–वैर् । १३–षम । १४ इतिर्, इति ॥
१ (वाचा) आज । २ यं । ३–माह–इति । ४–स नहीं । ५–वत । ६ ता ६

सामोऽपास्मह[7] इति ॥२॥ यत्पृथिव्यां तद्वेस्था३ इति । प्रतिष्ठा वा एषा तस्य साम्नो यद्वयं सामोपास्मह इति ॥३॥ यदप्सु तद्वेस्था३ इति । शान्तिर्वा एषा तस्य[8] साम्नो यद्वयं सामोपास्मह इति ॥४॥ [9]यदन्तरिक्षे तद्वेस्था३ इति । आत्मा वा एष तस्य साम्नो यद्वयं सामोपास्मह इति ॥५॥ यद्वायौ तद्वेस्था३ इति । श्रीर्वा एषा तस्य साम्नो यद्वयं सामोऽपास्मह इति ॥६॥ यदिक्षु तद्वेस्था३ इति । व्याप्तिर्वा एषा तस्य साम्नो[10] यद्वयं सामोपास्मह इति[11] ॥७॥ यद्दिवि तद्वेस्था३ इति । विभूतिर्वा[12] एषा तस्य साम्नो यद् वयं सामोपा-[12]स्मह इति ॥८॥ १।४२॥

चतुर्दशोऽनुवाके प्रथमः खण्डः।

यदादित्ये तद्वेस्था३ इति । तेजो वा एतत्तस्य[1] साम्नो यद्वयं सामोपास्मह इति ॥१॥ यच्चन्द्रमसि तद्वेस्था३ इति । भा वा एषा[1] तस्य साम्नो यद्वयं सामोपास्मह इति ॥२॥ यन्नक्षत्रेषु तद्वेस्था३ इति । प्रज्ञा[2] वा एषा तस्य[1] साम्नो यद्वयं सामोपास्मह इति ॥३॥ यदन्ने तद्वेस्था३ इति। रेतो वा एतत्तस्य[3][1] साम्नो यद्वयंसामोपास्मह

---

७ हाशिया पर लिखा है । ८ एतस्य । ९ नास्ति यद् ······ इति । १० नास्ति साम्नो ········ ऽप । ११—हा । १२ नास्ति व ······ स्मह ॥
१ नास्ति । २ प्रजा । ३ नास्ति, 'एतत्' में 'त्त्'।

इति ॥४॥ यत्[4]पच्छ्सु तद्वेत्था३ इति । यशो वा एतत्तस्य साम्नो यद्वयं सामोपास्मह इति ॥५॥ यदृचि तद्वेत्था३ इति। स्तोमो[5] वा एष तस्य[6] साम्नो यद्वयं सामोपास्मह इति ॥६॥ यद्यजुषि तद्वेत्था३ इति। कर्म वा एतत्तस्य[6] साम्नो यद्वयं सामोपास्मह इति ॥७॥ अथ किं उपास्स[7] इति। अक्षरमिति। कतमत्तदक्षरमिति। यत्क्षरन्नाऽक्षीयतेति। कतमत्तत्[8] क्षरन्[9]नाऽक्षीयतेति। इन्द्र इति ॥८॥ कतमस्स इन्द्र इति। यो[10]ऽक्षन्[11]रमत इति। कतमस्स[12] यो[13]ऽक्षन्रमत इति। इयं देवतेति होऽवाच ॥९॥ योऽयं चक्षु[14]षि पुरुष एष इन्द्र एष प्रजापतिः। (स) समः पृथिव्या सम आकाशेन समो दिवा समस्सर्वेण भूतेन। एष परो दिवो दीप्यते[15]। एष एवेदं सर्वमित्युपासितव्य[16]ः ॥१०॥ स य एवमेवं वेद ज्योतिष्मान् प्रतिष्ठावान्क्षान्तिमानात्मवान्छ्रीमान् व्याप्तिमान् विभूतिमांस्तेजस्वी[17] भावान् प्रज्ञावान्नेतस्वी यशस्वी स्तोमवान्[18] कर्मवानक्षरवानिन्द्रियवान् सामन्वीभवति ॥११॥ तद्वे[19]तदृचाऽभ्यनूच्यते ॥१२॥ ३।४३॥

चतुर्दशमेऽनुवाके द्वितीयः खण्डः।

---

४ नास्ति। ५ वो। ६ स्ते-। ७......'स्स' के लिये स्थान छोड़ा है। ८-त्। ९ अक्षरँ। १०-च। ११ इन्द्रमत्। १२ सो। १३ नास्ति। १४-र्ष। १५ दिव्य-। १६-सीतव्यं। १७-वी। १८ स्तोमान्। १९ उद्। ॥

रूपं-रूपम्प्रतिरूपोबभूव तदस्य रूपम्प्रतिचक्षणाय। इन्द्रोमायाभिःपुरुरूप[1] ईयते[2] युक्ता ह्यस्य हरयश्शतादश॥

इति ॥१॥ रूपं-रूपम्प्रतिरूपो बभूवेति। रूपं-रूपं ह्येष प्रतिरूपो बभूव ॥२॥ तदस्य रूपम्प्रतिचक्षणायेति। प्रतिचक्षणाय[3] हाऽस्यैतद्रूपम ॥३॥ इन्द्रो मायाभिः पुरुरूप[4] ईयत[2] इति। मायाभिर्ह्येषे एतत्पुरु रूप[5] ईयते[6] ॥४॥ युक्ता ह्यस्य हरयश्शता दशेति। सहस्रं हैत[7] आदित्यस्य रश्मयः। तेऽस्य युक्तास्तैरिदं सर्वं हरति। तद्यदेतैरिदं सर्वं[8] हरति तस्माद्धरयः ॥५॥ रूपं रूपम्मघवा बोभवीति मायाः कृण्वानः परितन्वं स्वाम्। त्रिर्यद्दिवः परि मुहूर्त[9]मागात् स्वैर्मन्त्रैरनृतुपा ऋतावेति ॥६॥

रूपं-रूपम्मघवा बोभवीतीति[10]। रूपं-रूपं[11] ह्येष मघवा बोभवीति ॥७॥ मायाः कृण्वानः[12] परि तन्वं स्वामिति। मायाभिर्ह्येष[13] एत[14]त्स्वां[15] तनुं गोपायति ॥८॥ त्रिर्यद्दिवः परिमुहूर्तमागादिति[16]। त्रिर्ह वा एष एतस्य मुहूर्तस्येमाम्पृथिवीं समन्तः पर्येतीमाः प्रजास्संचक्षाणः ॥९॥ स्वैर्मन्त्रैरनृतुपा[17] ऋतावेति। अनृतुपा ह्येष एतदृतावा[18] ॥१०॥१४४

चतुर्दशेऽनुवाके तृतीयः खण्डः।

---

१ पुरुरूप इप, पुरुरूपं। २ रम्यते। ३-णा। ४-पम। ५-पम। ६ रमीयते। ७ नास्ति, हरयश्……तेऽस्य। ८ 'म' अधिक है। ९ मुहूर्-। १० नास्ति, इति। ११ पुनः लिखा है 'रूपंरूपं'……वीत्तीऽति (!)। १२ कृण्वा। १३-र्भि। १४ दा। १५ नास्ति। १६ अति। १७ नृत्-। १८ ऋता॥

तद्ध पृथुर्वैन्यो दिव्यान्व्रात्यान्पप्रच्छ—

इन्द्रमुक्थमृचमुद्गीथमाहुर्ब्रह्म साम प्राणं व्यानम्[1] ।
मनो[2] वा चक्षुरपानमाहुश्श्रोत्रं श्रोत्रिया बहुधा वदन्तीति ॥१॥ ते प्रत्यूचुः—

ऋषय एते मन्त्रकृतः पुराजाः पुनराजायन्ते वेदानां गुप्त्यैकम् ।
ते वै विद्वांसो वैन्य तद्वदन्ति समानम्पुरुषम्बहुधा निविष्टम्, इति ॥२॥

इमां ह वा तद्देवतां त्रय्यां[3] विद्यायामिमां[4] समाना[5]मभ्येक[6] आपयन्ति नैके । यो ह वावैतदेवं वेद स एवैतां[7] देवतां सम्प्रति वेद ॥३॥ स एष इन्द्र उद्गीथः । स यदैष[8] इन्द्र उद्गीथ आगच्छति नैवोद्गातुश्चोपगातॄणां[9] च विज्ञायते[10] । इत एवोऽऽर्ध्व[11]स्स्वरु[12]देति । स उपरि मूर्ध्नो लेलायति ॥४॥ स विद्यादगमदिन्द्रो नेह कश्चन पाप्मा न्यङ्गः परिशेक्ष्य[13]त इति । तस्मिन् ह न कश्चन पाप्मा न्यङ्गः परिशिष्यते ॥५॥ तदेतदभ्रातृव्यं साम । न ह वा इन्द्रः कंचन भ्रातृव्यम्पश्यते । स यथेन्द्रो न कंचन भ्रातृव्यम्पश्यत एवमेव न कंचन भ्रातृव्यम्पश्यते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायाति ॥६॥१।४५॥

चतुर्दशेऽनुवाके चतुर्थः खण्डः । चतुर्दशोऽनुवाकस्समाप्तः ।

—:०:—

१–इदम । २ नो । ३ त्रय्यां, तूर्य्यां । ४ ईमां । ५–नी । ६ न्य । ७ हवै । ८ य वै । ९–तृन्– । १० 'ति' अधिक करो । ११ ध्वो । १२ स्वर । १३ परिषे–।

प्रजापतिर्वा वेद अग्र आसीत् । सोऽकामयत बहुस्स्याम्प्रजायेय भूमानं गच्छेयमिति ॥१॥ स षोडशधाऽऽत्मानं व्यकुरुत भद्रं च समाप्तिश्चाऽऽभूतिश्च[1] सम्भूतिश्च भूतं च सर्वं च रूपं चाऽपरिमितं च श्रीश्च यशश्च नाम चाऽग्रं च सजाताश्च पयश्च महीया[2] च रसश्च ॥२॥ तद्यद्भद्रं हृदयमस्य तत् । ततस्संवत्सरमसृजत । तदस्य संवत्सरोऽनूपतिष्ठते[3] ॥३॥ समाप्तिः कर्मास्य तत् । कर्मणा हि समाप्नोति । तत ऋतूनसृजत । तदस्यर्तवोऽनूपतिष्ठन्ते ॥४॥ आभूतिरन्नमस्य[4] तत्[5] । ( तच् ) चतुर्धा[6] भवति । ततो मासानर्धमासानहोरात्राण्युषसोऽसृजत । तदस्य मासा अर्धमासा अहोरात्राण्युषसोऽनूपतिष्ठन्ते ॥५॥ सम्भूती[7] रेतो[8]ऽस्य तद् । रेतसो हि सम्भवति ॥६॥ १४६॥

पञ्चदशोऽनुवाके प्रथमः खण्डः ।

ततश्चन्द्रमसमसृजत । तदस्य चन्द्रमा अनूपतिष्ठते । तस्मात्स रेतसः प्रतिरूपः ॥१॥ भूतम्[1]प्राणो[2]ऽस्य सः । ततो वायुमसृजत । तदस्य वायुरनूपतिष्ठते ॥२॥ सर्वमपानोऽस्य सः । ततः पशूनसृजत । तदस्य पशवो[3]ऽनूपतिष्ठन्ते ॥३॥ रूपं व्यानोऽस्य सः । ततः प्रजा

---

१ श्चे । २—यां । ३—मन्ते । ४ 'त' अधिक है । ५ तद् । नास्ति । ६ चैवर्धा, च्यर्धा । ७—ति,—ता, त ।

१—त । २—णा । ३ रूपशवो ।

असृजत । तदस्य प्रजा अनूपतिष्ठन्ते । तस्मादासु प्रजासु रूपाण्य-
धिगम्यन्ते[४] ॥४॥ अपरिमितम्मनोऽस्य तत् । ततो[५] दिशोऽसृजत ।
तदस्य दिशोऽनूपतिष्ठन्ते । तस्मात्ता अपरिमिताः । अपरिमितमिव हि
मनः ॥५॥ श्रीर्वागस्य सा । ततस्समुद्रमसृजत । तदस्य समुद्रो-
ऽनूपतिष्ठते ॥६॥ यशस्तपोऽस्य तत् । ततोऽग्निमसृजत । तदस्या[६][७]-
ऽग्निरनूपतिष्ठते । तस्मात्स मथितादिव[८] सन्तप्तादिव जायते ॥७॥
नाम चक्षुरस्य तत् ॥८॥ १।४७॥

पञ्चदशेऽनुवाके द्वितीयः खण्डः ।

तत आदित्यमसृजत । तदस्यादित्योऽनूपतिष्ठते ॥१॥ अग्र-
म्मूर्धास्य सः । ततो दिवमसृजत । तदस्य द्यौरनूपतिष्ठते ॥२॥
सजाता अङ्गान्यस्य[१] तानि[२] । अङ्गैर्हि[३] सह जायते । ततो वनस्पती-
नसृजत । तदस्य वनस्पतयोऽनूपतिष्ठन्ते ॥३॥ पयो[४] लोमान्यस्य
तानि । तत ओषधीरसृजत । तदस्यौषधयोऽनूपतिष्ठन्ते ॥४॥ महीया[५]
माँसान्यस्य तानि । माँसैर्हि सह[६] महीयते । ततो वयाँस्यसृजत ।
तदस्य वयाँस्यनूपतिष्ठन्ते । तस्मात्तानि अप्रतिष्ठानि । अप्रतिष्ठानी-

---

४–न्यते । ५ नास्ति, ततो········तस्मात् । ६ नास्ति । ७ तस्या ।
८ मथिताग्निः, मथितिताद् ॥

१ अंगान्य, अंगहान्य्, अङ्गैश्च् । २ ता । ३ गैर् । ४ नास्ति,
पयो········अनूपतिष्ठन्ते । ५ महिया, मह्या । ६ स ॥

ऽव महामाँसानि ॥५॥ रसो मज्जाऽस्य सः । ततः पृथिवीमसृजत । तदस्य पृथिव्यनूपतिष्ठते ॥६॥ स हैवं षोडशधाऽऽत्मानं विकृस साधं समैत् । तद्यत्साधं समैतत् तत्साम्नस्सामत्वम् ॥७॥ स एवैष हिरण्मयः पुरुष उदतिष्ठत्प्रजानां जनिता ॥८॥ १।४८॥

पञ्चदशोऽनुवाके तृतीयः खण्डः ।

देवासुरा अस्पर्धन्त । ते देवाःप्रजापतिमुपाधावाञ्जयामाऽसुरानिति ॥१॥ सोऽब्रवीन्न वै मां यूयं वित्थ नाऽसुराः । यद्वै मां यूयं विद्यात ततो वै यूयमेव स्यात पराऽसुराभवेयुरिति ॥२॥ तद्वै ब्रूहीऽत्यब्रुवन् । सोऽब्रवीत्पुरुषः प्रजापतिस्सामेति मोऽपाद्धवम् । ततो वै यूयमेव भविष्यथ पराऽसुरा भविष्यन्तीति ॥३॥ तम्पुरुषः प्रजापतिस्सामेऽत्युपासत । ततो वै देवा अभवन् पराऽसुराः । स यो हैवं विद्वान्पुरुषः प्रजापतिस्सामेऽत्युपास्ते भवत्यात्मना पराऽस्य द्विषन् भ्रातृव्यो भवति ॥४॥ १।४९॥

पञ्चदशोऽनुवाके चतुर्थः खण्डः । पञ्चदशोऽनुवाकस्समाप्तः ।

---

७ महीम्–न ८ मज्ज्या । ९–न्ते । १० समैत; तत्पश्चात्, 'तद्यत्साधं समैतत' (!) पुनः है । ११ जयिता ॥

१ यस्य । २–थेत । ३–हिं ॥

देवा वै विजिग्याना[1] अब्रुवन्द्वितीयं करवामहै । माऽद्वितीया भूमेति । तेऽब्रुवन सामैव[2] द्वितीयं करवामहै । सामैव नो द्वितीयमस्त्विति ॥१॥ त इमे द्यावापृथिवी अब्रुवन् समेतं साम प्रजनयतमिति ॥२॥ सो[3]ऽसावस्या अबीभत्सत[4] । सो[3]ऽब्रवीद्बहु वा एतस्यां किं च किं च कुर्वन्त्यधिष्ठीवन्त्यधि[5]चरन्त्यभ्यासते । पुनीत न्वेनामपूता वा इति ॥३॥ ते गाथामब्रुन्त्वया पुनामेति । किं ततस्स्यादिति । शतसनि[6]स्स्या इति । तथेति । ते गाथयाऽपुनन् । तस्मादुत गाथया शतं स्नुनोति ॥४॥ ते कुम्भ्यामब्रुवन् त्वया पुनामेति । किं ततस्स्यादिति । शतसनिस्स्या इति । तथेति । ते कुम्भ्यया[7]ऽपुनन् । तस्मादुत कुम्भ्यया[7] शतं स्नुनोति[8] ॥५॥ ते[9] नाराशँसीमब्रुवन् त्वया पुनामेति । किं ततस्स्यादिति । शतसनिस्स्या[10] इति । तथेति । ते नाराशँस्याऽपुनन् । तस्मादुत नाराशँस्या शतं स्नुनोति ॥६॥ ते रैभीम[11]ब्रुवन् त्वया पुनामेति । किं तत[12]स्स्यादिति । शतसनिस्स्या[10] इति । तथेति । ते रैभ्याऽपुनन् । तस्मादुत रैभ्या शतं

---

१ विजिज्ञाना । २ वा । ३ सा । ४ अबीहत्– । ५–ष्ठिव– । ६–नि,–नी । ७–भ्य्– । ८ '५' पुनः । लिखा है । ९ तेन । १० शतनी । ११–भिम्र । १२ त ॥

सुनोति ॥७॥ सेयम्पूता । अथाऽमुमब्रवीद्वहु वै किं च किं च पुमाँश्चरति । त्वमनुपुनीष्वेति ॥८॥ १।५०॥

षोडशोऽनुवाके प्रथमः खण्डः ।

स ऐलवेनाऽपुनीत । पूतानि ह वा अस्य सामानि पूता ऋचः पूतानि यजूँषि पूतमनूक्तम्पूतं सर्वम्भवति य एवं वेद ॥१॥ ते समेत्य साम प्राजनयताम् । तद्यत्समेत्य साम प्राजनयतां तत्सा-म्नस्सामत्वम् ॥२॥ तदिदं साम सृष्टमद उत्क्रम्य लेलायदतिष्ठत् । तस्य सर्वे देवा ममात्विन आसन्मम ममेति ॥३॥ तेऽब्रुवन्वीद-म्भजामहा इति । तस्य विभागे न समपादयन् । तान्प्रजापतिर-ब्रवीदपेत । मम वा एतत् । अहमेव वो विभक्ष्यामीति ॥४॥ सोऽग्निमब्रवीत्त्वं वै मे ज्येष्ठः पुत्राणामसि । त्वम्प्रथमो वृणीष्वेति ॥५॥ सोऽब्रवीन्मन्द्रं साम्नो वृणेऽन्नाद्यमिति । स य एतद्गायाद-न्नाद एव सोऽसन्मामु स देवानामृच्छाद्य एवं विद्वाँसमेतद्गायन्त-मुपवदादिति ॥६॥ अथेन्द्रमब्रवीत्त्वमनुवृणीष्वेति ॥७॥ सोऽब्र-

१३ तम ।

१-लव-।, ऐलवैनां । २-वाम । ३ प्रेज्-। ४-ग्नत् । ५ मे । ६ 'घोऽदम' के लिये स्थान खाली है, वीदां । ७ भविष्य्-। ८ श्रियम । ९ गायत्राच् । १० ह्रीमान् । ११ अथ । १२ सोमम् ।

वी[13]दुग्रं साम्नो वृणे श्रि[14]यमिति । स[15] य एतद्गायाच्छ्री[16]मानेव सोऽस-
न्मासु स देवानामृच्छाद्य एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥८॥
अथ सोममब्रवीत्त्वमनुवृणीश्वेति ॥९॥ सोऽब्रवीद्[15]वल्गु साम्नो वृणे
प्रियमिति । स य एतद्गायात्प्रिय एव स कीर्तेः प्रियश्चक्षुषः प्रिय-
स्सर्वेषामसन् मासु स देवानामृच्छाद्य एवं विद्वाँसमेतद्गायन्तमुप-
वदादिति ॥१०॥ अथ बृहस्पतिमब्रवीत्त्व[17]मनुवृणी[18]ष्वेति ॥११॥
सोऽब्रवीत्क्रौञ्चं साम्नो वृणे ब्रह्मवर्चसमिति । स य एतद्गायाद्ब्रह्म-
वर्चस्येव सोऽसन्मासु स देवानामृच्छाद्य एवं विद्वाँसमेतद्गायन्तमुप-
वदादिति ॥१२॥ ३।५।१॥

षोडशेऽनुवाके द्वितीयः खण्डः ।

अथ विश्वान् देवानब्रवीद्यूयमनुवृणीध्वमिति ॥१॥ तेऽब्रुवन्वैश्व-
देवं साम्नो वृणीमहे प्रजननमिति । स य एतद्गायात्प्रजावानेव सोऽस-
द[1]स्मा[2]तु देवानामृच्छाद्य एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥२॥
अथ पशूनब्रवीद्यूयमनुवृणीध्वमिति ॥३॥ तेऽब्रुवन्वायुर्वा अस्माक-
मीशे । स एव नो वरि[3]ष्यत इति । ते वायुश्च पशवश्चाब्रुवन्निरु[4]क्तं साम्नो

---

१३ वल्गु । १४ प्रियम । १५ नास्ति, स य ...... सोऽब्रवीद् ९ में ।
१६ गायत्रच । १७ नास्ति । १८ नुवृ— ।

१ 'म' अधिक है । २ नीचे से 'च स वायु' अधिक लेता है ।
३ वरिष्ठ । ४ अनिर— ।

वृणीमहे पशव्यमिति। स य एतद्गायात्पशुमानेव सोऽसदस्मानु च स वायुं[५] च देवानामृ[६]च्छाद्य एवं विद्वाँसमेतद्गायन्तमुपवदादिति॥४॥ अथ प्रजापतिरब्रवीदहमनुवरिष्य इति[७] ॥५॥ सोऽब्रवीदानिरुक्तं साम्नो वृणे स्वर्ग्य[८]मिति। स य एतद्गायात्स्वर्गलोक एव सोऽसन्मा[९]मु स देवानामृ[६]च्छाद्य एवं विद्वाँसमेतद्गायन्तमुपवदादिति ॥६॥ अथ वरुणमब्रवीत्त्वमनुवृणीष्वेति ॥७॥ सोऽब्रवीद्यद्वो न कश्चना-ऽव्रत तदहम्परि[१०]हरिष्य इति। किमिति। अ[११]पध्वान्तं साम्नो वृणेऽपश-व्यमिति। स य एतद्गायादप[१२]शुरेव सोऽसन्मामु स देवानामृ[१३]च्छाद्य एतद्गायादिति ॥८॥ तानि वा एतान्यष्टौ गीतागीतानि साम्नः। इमान्यु ह वै सप्तगीतानि। अ[१४]थेयमेव वारुण्यागाऽगीता ॥९॥ स यां ह[१५] कां चैवं विद्वानेतासां सप्तानामागानां गायति गीतमेवास्य भवत्येतानु कामा[१६]न्वा[१७]प्नोति य एतासु कामाः। अथेमामेव वारुणी-मागां न गायेत् ॥१०॥ १५२॥

षोडशोऽनुवाके तृतीयः खण्डः। षोडशोऽनुवाकस्समाप्तः।

——:o:——

५–युग्। ६ 'इति' तक शेष नहीं लिखा। ७ ति। ८ स्वर्गम्। ९ समुत्। १०–हृष्य्–क–, यत। ११ अपध्मातम्, अपध्मातम्। १२ पशु–। १३ अच्छाद्। १४–थ, श्य। १५–श। १६ कामा। १७ मीरध्न–, निर्भ्राप्नोति॥

द्वयं वावेदमग्र आसीत्सच्चैवासच्च ॥१॥ तयोर्यत् सत् तत्साम तन्मनस्स प्राणः। अथ यदसत्सर्क्[1] सा वाक् सोऽपानः ॥२॥ तद्यन्मनश्चप्राणश्च तत्समानम्। अथ या वाक् चापानश्च तत्समानम्। इदमायतनम्मनश्च प्राणश्चेदमायतनं[2] वाक् चापानश्च। तस्मात्पुमान्दाक्षिणतो योषामुपशेते[3] ॥३॥ सेयमृगस्मिन् साम[4]न् मिथुनमैच्छत। तामपृच्छत् का त्वमसीति। साहमस्मीत्यब्रवीत्। अथ वा अहममोऽस्मीति ॥४॥ तद्यत्सा चाऽमश्चतत् सामाऽभवत् तत्साम्नस्सामत्वम् ॥५॥ तौ वै सम्भवावेति। नेत्यब्रवीत्स्वसा वै मम त्वमस्यन्यत्र मिथुनमिच्छस्वेति॥६॥साऽब्रवीन्न वै तं विन्दामि येन सम्भवेयम्[5]। त्वयैव सम्भवानीति। सा वै पुनीष्वेत्यब्रवीत्। अपूता वा असीति[6] ॥७॥ साऽपुनीत यदिदं विप्रा[7] वदन्ति तेन। साऽब्रवीत्त्वे[8]दम्भविष्यतीति[9]। प्रत्यूहेत्यब्रवीत्। धीर्वा एषा। प्रजानां जीवनं वा एतद्भविष्यतीति। तथेति। तत्प्रत्यौहत। तस्मादेषा धीरेव प्रजानां जीवनमेव ॥८॥ पुनीष्वेत्यब्रवीत्। साऽपुनीत गाथया साऽपुनीत कुम्ब्यया[10] साऽपुनीत नाराशँस्या साऽपुनीत पुराणेति-

---

१ म्यक–अस्म्यदद्य भवितेऽति, (अस्त्य) भवितेति। २–ना। ३ उपवशेते। ४–म। ५ सम्भवेत्। यम्। ६ 'वा' अधिक है। ७ प्रा, रिप्रा। ८ त्वे। ९ त्यव्। १०–म्भ–, 'वा' अधिक है।

हासेम साऽपुनीत यदिदमादाय नाऽऽगायन्ति तेन ॥९॥ साऽब्र-
वीत्केदम्भविष्यतीति । प्रत्युहेत्यब्रवीत् । धीर्वा एषा । प्रजानां
जीवनं वा एतद्भविष्यतीति । तथेति । तत्प्रत्यौहत् । तस्मादेषा
धीर्वेव प्रजानां जीवनम्वेव ॥१०॥ पुनीष्वैवेत्यब्रवीत् ॥११॥ १५३॥

सप्तदशोऽनुवाके प्रथमः खण्डः ।

सा मधुनाऽपुनीत । तस्मादुत ब्रह्मचारी मधु नाऽश्नीयाद्वेदस्य
पलाव इति । कामं ह त्वाचार्यदत्तमश्नीयात् ॥१॥ अथर्क् सामा-
ब्रवीद्वहु वै किं च किं च पुमाँश्चरति । त्वमनुपुनीष्वेति । स
भरण्डकेष्णोनाऽपुनीत । पूतानि ह वा अस्य सामानि पूता ऋचः
पूतानि यजूँषि पूतमनूक्तम्पूतं सर्वम्भवति य एवं वेद ॥२॥ ताभ्यां
सदो मिथुनाय पर्यश्रयन् । तस्मादुपवसथीयां रात्रिं सदसि न
श्रयीत । अत्र ह्येतावृक्सामे उपवसथीयां रात्रिं सदसि सम्भवतः ।
स यथा श्रेय स उपद्रष्टैवं हि शश्वदीश्वरोऽनुलब्धः पराभवितोः
॥३॥ अथो आहुरुद्गातुर्मुखे सम्भवतः । उद्गातुरेव मुखं नेत्ते-

---

११ हसम । १२ मादायना, आदायना ॥

१. सारे पद का पुनर्लेख है । २ स 'कामम' के स्थान में ।
मा सर्वत्र है । ३ हरुण्डकेष्णोना, भरण्ड, भरुण्डकोद्योना । ४-वन् ।
५-धीयाम,-शीयामं । ६-ई । ७ यीत, येत । ८-ध्-। ९ श्रद् ।
१० नुनुलम्ध, अनुनुलुब्ध-।

तेति ॥४॥ तदु त्रा आहुः काममेवोद्गातुर्मुखमीत्तेत। उपवसथीयामे-
वैतां रात्रिं सदसि न शयीत। अत्र ह्येवैतावृक्सामे उपवस्थीयां[12]
रात्रिं सदसि सम्भवत इति ॥५॥ तां सम्भविष्यन्नाहाऽमोऽहम-[13]
स्मि सा त्वं सा त्वमस्यमोऽहम्। सा मामनुव्रता भूत्वा प्रजाः प्रज-[14]
नयावहै। एहि सम्भवावहा इति ॥६॥ तां सम्भवन्नत्यरिच्यत[15][16]
सोऽब्रवीन्न वै त्वाऽनुभवामि। विराड् भूत्वा प्रजनयावेति।
तथेति ॥७॥ तौ विराड्भूत्वा प्राजनयताम्। हिङ्कारश्चाऽऽहावश्च[17]
प्रस्तावश्च प्रथमा चोद्गीथश्च मध्यमा च प्रतिहारश्चोत्तमा च निधनं
च वषट्कारश्चैवं विराड् भूत्वा प्राजनयताम्। ते अमुमजनयतां[18][19]
योऽसौ तपति। ते व्यद्रवताम् ॥८॥ १५४॥[20]

सप्तदशोऽनुवाके द्वितीयः खण्डः।

मदध्यभू३न्मदध्यभू३दिति। तस्मादाहुर्मधुपुत्र इति ॥१॥[1]
तस्मादुतस्त्रियो मधु नाऽश्नन्ति पुत्राणामिदं व्रतं चराम इति वदन्तीः
॥२॥ तदयं तृचोऽनूदश्रयत। इयमेव गायत्र्यन्तरिक्षं त्रिष्टुबसौ[2][3]
जगती। तस्यैतत्तृचः ॥३॥ स उपरिष्टात्सामाऽभ्याहितं तपति।

---

११ न। १२-थी-। १३ 'रणा' अधिक है। १४-प्र्-। १५ संभवत।
१६ आत्यरिच्यते। १७हिं-। १८ ष। पवम। १६ प्रज्-।
२० व्यद्दप्ताम, भ्यद्दवताम, व्यद्दपताम् (?)॥

१-भ्रा। २ इदम्। ३-ईम्-।

सोऽध्रुव इवासीदलेलायदिव । स नोर्ध्वो॑ऽतपत ॥४॥ स देवा-
नब्रवीदुन्मा गायतेति । किं ततस्स्यादिति । श्रियं वः प्रयच्छेयम् ।
मामिह हँहेतेति॑ ॥५॥ तथेति । तमुदगायन्॑ । तमेतदत्राऽदँहन्॑ ।
तेभ्यश्श्रियम्प्रायच्छत् । सैषा देवानां श्रीः ॥६॥ तत एतदूर्ध्वस्तपति ।
स नार्वाङ्तपत॑ ॥७॥ स ऋषीनब्रवीदनु मा गायतेति । किं
ततस्स्यादिति । श्रियं वः प्रयच्छेयम् । मामिहदँहेतेति ॥८॥ तथेति ।
तमन्वगायन् । तमेतदत्राऽदँहन् । तेभ्यश्श्रियम्प्रायच्छत् । सैषा ऋषीणां
श्रीः ॥९॥ तत एतदर्वाङ् तपति । स न तिर्यङ्॑ अतपत ॥१०॥
स गन्धर्वाप्सरसोऽब्रवीदामा गायतेति । किं तत॑स्स्यादिति ।
श्रियं वः प्रयच्छेयम् । मामिहदँहेतेति ॥११॥ तथेति । तमागायन् ।
तमेतदत्राऽदँहन् । तेभ्यश्श्रियम्प्रायच्छत् । सैषा गन्धर्वाप्सरसां
श्रीः ॥१२॥ तत एतत् तिर्यङ्॑ तपति ॥१३॥ तानि वा एतानि
त्रीणि साम्न उद्गीतमनुगीतमागीतम् । तद्यथेदं वयमागायो॑द्गायाम
एतदुद्गीतम्॑ । अथ यद्यथागीतं तदनुगीतम् । अथ यत्किंचेति सा-
म्नस्तदागीतम् । एतानि ह्येव त्रीणि साम्नः ॥१४॥ १।५५॥

सप्तदशोऽनुवाके तृतीयः खण्डः । सप्तदशोऽनुवाकस्समाप्तः ।

:o:

४ ध्र्‌-,ध्‌-। ५ दुंहेते। ६ उदगात्। ७-हत्। ८ तप्‌-। ९ तिर्य्यंद्‌।
१० स । ११ तिर्यँद्‌। १२ आगयो, आगेयो-। १३-थम ॥

आपो वा इदमग्रे महत्सलिलमासीत् । स ऊर्मिरूर्मिमस्कन्दत्[१] । ततो हिरण्मयौ कुद्यौ[२] समभवतां ते एवर्क्[३]सामे[४] ॥१॥ सेयमृगिदं सामाऽभ्यप्लवत[५] । तामपृच्छत् का त्वमसीति । साहमस्मीत्यब्रवीत् । अथ वा अहममोऽस्मीति । तद्यत्सा चाऽमश्च तत्साम्नस्सामत्वम् ॥२॥ तौ वै सम्भवावेति । नेत्यब्रवीत्स्वसा वै मम त्वमसि । अन्यत्र मिथुनमिच्छस्वेति ॥३॥ सा पराप्लवत[६] मिथुनमिच्छमाना । सा समास्सहस्रं सप्ततीः पर्यप्लवत ॥४॥ तदेष श्लोकः—

> स्त्री सैवाऽग्रे सञ्चरती[७]च्छन्ती[८] सलिले पतिम् ।
> समास्सहस्रं सप्तती स्ततोऽजायत पश्यत, इति ॥५॥

असौ वा आदित्यः पश्यतः[९] । एष एव तदजायत[१०] । एतेन हि पश्यति ॥६॥ साऽविस्त्वा[११] न्यप्लवत । साऽब्रवीन्न[१२] वै तं विन्दामि येन सम्भवेयम् । त्वयैव सम्भवानीति ॥७॥ सा वै द्वितीयामिच्छस्वेत्यब्रवीन्न वै मैकोऽध्वंस्यसीति । सा द्वितीयां[१३] विस्त्वा[११] न्यप्लवत ॥८॥ (तृतीयाम्) इच्छस्वैवे[१४]त्यब्रवीन्नो वाव[१५] मा[१६] द्वे[१७] उध्वंस्यथ इति । सा तृतीयां[१३] विस्त्वा न्यप्लवत । सोऽब्रवीदत्र[१७] वै मोऽध्वंस्यथेति[१८]

१—द । २ कुद्यौ । ३ येप । ४ केसा— । ५ ह्यप्लु— । ६ पपरा— । ७ सम्ती । ८—ति । ९ पश्य:— । १० तम् । ११ पित्वा । १२ नास्ति सा········न्यप्लवत । १३—यम् । १४ वै । १५ वा । १६ स्थान छोड़ा हुआ है, ध्वे । १७ अव्— १८—स्यसी ।

॥९॥ स यदेकयाऽग्रे समवदत[19] तस्मादेकर्चे साम। अथ यद्वे अपा-सेधत्तस्माद्वयोर्न कुर्वन्ति । अथ यत् तिसृभिस्समपादयत्[20] तस्मादु[21] तृचेसाम॥१०॥ ता अब्रवीत्पुनीध्वं न पूता वै स्थेति॥११॥ १।५६॥

अष्टादशोऽनुवाके प्रथमः खण्डः।

सा गायत्री गाथयाऽपुनीत नाराशँस्या[1]त्रिष्टुब्रैभ्या जगती। भीमम्बत[2] मलमपावधिषतेति। तस्माद्भीमलाधियो वा एताः। धियो वा इमा मलमपावधिषतेति[3]। तस्मादु भीमलाः। तस्मादु गायतां[4] नाऽश्नीयात्[5]। मलेन ह्येते जीवन्ति ॥१॥ अथर्क्[6] सामाऽब्रवीद्वहु वै किं च किं च पुमाँश्चराति। त्वमनुपुनीष्वेति। स ऊर्ध्वगणेना-ऽपुनीत ॥२॥ पूतानि ह वा अस्य सामानि पूता[7] ऋचः पूतानि यजूँषि पूतमनूक्त[8]म्पूतं[9] सर्वम्भवति य एवं वेद ॥३॥ ताभ्यां दिशो मिथुनाय पर्यौहन्। तां सम्भविष्य[10]न्नह्वयता[11]ऽमोऽहमस्मि सा त्वं[12] सा त्वमस्यमोऽहमिति ॥४॥ तामेतदुभयतो वाचा[13]ऽस्वरिच्यत[14] हिङ्कारेण पुरस्तात्स्तोभेन मध्यतो निधनेनोपरिष्टात्। अतितिस्रो-ब्राह्मणायनीस्सदृशी रिच्यते य एवं वेद ॥५॥ तयोर्यस्सम्भवतो-

---

१९–पदू–। २० तिस्र–। २१ सम्पू–॥

१–स्योत्। २ व। ३–थे। ४–ता। ५ ऽग्नी–। ६ र्कं। ७–तानी। ८–ता। ९ नूक्–। १०–ष्यन्न्। ११ अवचयत, अह्वयन्त। १२ सामं १३–च। १४ त्वरूच्यते।

रूर्ध्वश्शूषो[15]ऽद्रवत (प्राणास्) ते । ते प्राणा एवोर्ध्वा अद्रवन्[16] ॥६॥ सोऽसावादित्यस्स एष एव उदग्निरेव गी चन्द्रमा एव थम् । सामान्येव उद्दच एव गी यजूँष्येव थमित्यधिदेवतम् ॥७॥ अथाऽध्यात्मम्[17] । प्राण एव उद्वागेव गी मन एव थम् । स एषोऽधिदेवतं चाऽध्यात्मं चोद्गीथः[18] ॥८॥ स य एवमेतदधिदेवतं चाऽध्यात्मं चोद्गीथं वेदैतेन हास्य सर्वेणोद्गीतम्भवत्[19]येतस्[20]मादु एव सर्वस्मादात्मच्यते य एवं विद्वाँसमुपवदति ॥६॥ १।५७॥

अष्टादशेऽनुवाके द्वितीयः खण्डः ।

तद्यदिदमाहुः क उदगासीरिति क एतमादित्यमगासीरिति[1] ह वा एतत्पृच्छन्ति[2] ॥१॥ एतं ह वा एतं त्रय्या[3] विद्यया गायन्ति । यथा वीणागाथिनो[4] गापयेयुरेवम् ॥२॥ स एष ह्रदः[5] कामानाम्पूर्णो यन्मनः । तस्यैषा कुल्या[6] यद्[7]वाक्[8] ॥३॥ तद्यथा[9] वा अपो[10] ह्रदात्कुल्ययोऽपरामुपनयन्त्ये[11]वमेवैतन्मनसोऽधि वाचोद्गाता यजमानम्[12] यस्य कामान् प्रयच्छति ॥४॥ स य उद्गातारं दक्षिणा[13]भिराराधयति[14]

---

१५ चुं–। १६ द्र–। १७ ऽद्धा–। १८ गाथ्–। १६–गीथ्–। २० भवत्येति, भवन्ति ॥

१–सी । २ प्रच्छँन्त्य् । ३ तृय्या । ४–गायिनो, गायय्–। ५ ह्रद्–। ६ कूल्–। ७ यत् । ८ वात् । ६–त्र । १० अदो । ११–यँन्य,–यन्ते, –यन्त्य् । १२–ना । १३ दक्षिणोभि । १४ राध्–।

तं सा कुल्यो[१४]ऽपधावति । य उ एनं नाऽऽराधयति स उ तामपिहन्ति ॥५॥ अथ वा अतः[१५] प्रत्तिश्चैव[१६] प्रतिग्रहश्च । तद्भूमामिति[१७] वै प्रदीयते । तद्वाचा यजमानाय प्रदेयम्मनसाऽऽत्मने[१८] । तथा ह सर्वं न प्रयच्छति ॥६॥ तद्यदिदं सम्भवतो रेतोऽसिच्यत[१९] तदशयत[२०] । यथा हिरण्यमविकृतं[२१] लेलायदेवम् ॥७॥ तस्य सर्वे देवा ममात्विन आसन्मम ममेति । तेऽब्रुवन्नीदं करवामहा इति । तेऽब्रुवञ्छ्रेयो[२२] वा इदमस्मत् । आत्मभिरेवैनाद्विकरवामहा इति ॥८॥ तदात्मभिरेव व्यकुर्वत । तेषां वायुरेव हिङ्कार आसाऽग्निः प्रस्ताव इन्द्र आदिस्सोमबृहस्पती[२३] उद्गीथोऽश्विनौ प्रतिहारो विश्वे देवा उपद्रवः प्रजापतिरेव निधनम् ॥९॥ एता वै सर्वा देवता एता हिरण्यम्[२४] । अस्य सर्वाभिर्देवताभिस्स्तुतम्भवति य एवं वेद । एताभ्य उ एव स सर्वाभ्यो देवताभ्य आवृश्च्यते य एवं विद्वाँसमुपवदाति ॥१०॥ ३।५८॥

अष्टादशेऽनुवाके तृतीयः खण्डः ।

अथ ह ब्रह्मदत्तश्चैकितानेयः कुरुं[१] जगामाऽभिप्रतारिणं[२] काक्षसेनिम् । स हाऽस्मै मधुपर्कं ययाच ॥१॥ अथ हास्य वैभपद्य[३] पुरो-

---

१५ अधः । १६ प्रतिश् । १७ धुं- । १८ आत्- । १९ सिध्य- । २० दश्- । २१ अपि-, अपितृतं । २२ या । २३ सोमाबृ-ह । २४ हिरण्य् ॥

१ कु-, आरैन् । २ एक में यहां हि समाप्ति है । ३-य ।

हितोऽन्ते निषसाद शौनकः । तं हाऽनामन्त्र्य[४] मधुपर्कम्पपौ ॥२॥ तं होवाच किं विद्वान्नो दाल्भ्याऽनामन्त्र्य मधुपर्कम्पिबसीति । सामवैर्यम्प्रपद्येति[५] होवाच ॥३॥ तं ह तत्रैव[६] पप्रच्छ यद्वा यौ तद्वेत्था३इति । हिङ्कारो वा अस्य स इति ॥४॥ यदग्नौ तद्वेत्था३-इति । प्रस्तावो वा अस्य स इति ॥५॥ यदिन्द्रे तद्वेत्था३इति । आदिर्वा अस्य स इति ॥६॥ यत्सोमबृहस्पत्योस्तद्वेत्था[७]३इति । उद्-गीथो वा अस्य स इति ॥७॥ यदश्विनोस्तद्वेत्था३इति । प्रतिहारो वा अस्य स इति ॥८॥ यद्विश्वेषु[८] देवेषु तद्वेत्था[९]३इति । उपद्रवो वा अस्य स इति ॥९॥ यत्प्रजापतौ तद्वेत्था३इति । निधनं वा अस्य तदिति होवाच । आर्षेयं वा अस्य तद्बन्धुता वा अस्य[१०] सेति ॥१०॥ स होवाच नमस्तेऽस्तु भगवो विद्वानपा मधुपर्कमिति ॥११॥ अथ हेतरः पप्रच्छ किं देवत्यं[११] सामवैर्यम्प्रपद्योति[१२]। यद्देवत्या-सु स्तुवत इति होवाच तद्देवत्यमिति ॥१२॥ तदेतत् साध्वेव प्रत्युक्तम्[१३] । व्याप्तिर्वा अस्यैषेति होवाच ब्रूह्येवेति । मेदं ते नमो-ऽकर्मेति होवाच । मैव नोऽतिप्राप्सीरिति ॥१३॥ स होवाचाऽप्रत्त्यं

---

४-मन्त्र्य । ५ सामवैर्यम्प्र, 'र' रहित । ६ तत । ७ सोमाश्व- । ८ 'द-' का पुनर्लेख । ९ नास्ति । १० अस्य । ११-वत्या । १२ सामवैर्य्या । १३-उत्तम ।

याव त्वा देवतामभक्त्यं याव त्वा देवतायै देवताः । वाग्देवस्त्वं साम वाचो मनो देवता मनसः पशवः पशूनामोषधय ओषधीनामापः । तदेतदद्भ्यो[१४] जातं सामाऽप्सु प्रतिष्ठितमिति ॥१४॥ ११५६॥

अष्टादशेऽनुवाके चतुर्थः खण्डः ।

देवासुरा अस्पर्धन्त । ते देवा मनसोद्गायन्[१] । तदेषामसुरा अभिद्रुत्य[२] पाप्मना समसृजन्[३] । तस्माद्बहु किं च किं च मनसा ध्यायाति । पुण्यं चैनेन ध्यायाति पापं च ॥१॥ ते वाचोद्गायन् । तां तथैवा[४]ऽकुर्वन्[५] । तस्माद्बहु किं च किं च वाचा वदति । सत्यं[६] चैनया[७] वदत्यनृतं च ॥२॥ ते चक्षुषोद्गायन् । तत्तथैवाऽकुर्वन् तस्माद्बहु किं च किं च चक्षुषा पश्यति । दर्शनीयं चैनेन पश्यत्य दर्शनीयं च ॥३॥ ते श्रोत्रेणोद्गायन् । तत्तथैवाऽकुर्वन् । तस्माद्बहु किं च[८] किं च[८] श्रोत्रेण शृणोति । श्रवणीयं चैनेन शृणोत्यश्रवणीयं च ॥४॥ तेऽपानेनोद्गायन् । तं तथैवाऽकुर्वन् । तस्माद्बहु किं च किं चाऽपानेन जिघ्रति । सुरभि चैनेन जिघ्रति दुर्गन्धि च ॥५॥ ते प्राणेनोद्गायन्[९] । अथासुरा आद्रवँस्तथा करिष्याम इति मन्यमानाः ॥६॥ स यथाऽश्मानमृत्वा लोष्टो विध्वँसेतैवमेवाऽसुरा

१४ भ्यो ।

१ ऽगाय्- । २-द्रुत्य अथवा-द्रुत्य । ३-सृज्- । ४ व । ५ कुर्- । ६-त्य । ७ चै । ८ नास्ति । ९-गात् ।

व्यध्वँसन्त[10] । स एषोऽश्माऽऽखणं[11] यत्प्राणः ॥७॥ स यथाऽश्मान-
माखणमृत्वा[12] लोष्टो विध्वँसत एवमेव स विध्वँसते य एवं विद्वाँ-
समुपवदति ॥८॥ १।६०॥

अष्टादशोऽनुवाके पञ्चमः खण्डः । अष्टादशोऽनुवाकस्समाप्तः ।

[ इति प्रथमोऽध्यायः । ]

———:०:———

१० सते, षन्ता । ११—णों । १२ आखोम ।

# [ अथ द्वितीयोऽध्यायः । ]

देवानां वै षडुद्गातार आसन् वाक् च मनश्च चक्षुश्च श्रोत्रं चाऽपानश्च प्राणश्च ॥१॥ तेऽध्रियन्त तेनोद्गात्रा दीक्षामहै येनाऽपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमियामेति ॥२॥ तेऽब्रुवन् वाचोद्गात्रा दीक्षामहा इति । ते वाचोद्गात्राऽदीक्षन्त । स यदेव वाचा वदति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ॥३॥ ताम्[1]पाप्माऽन्वसृज्यत । स[2] यदेव वाचा पापं वदति स एव स पाप्मा ॥४॥ तेऽब्रुवन् न वै नोऽयम् मृत्युं[3] न पाप्मानमत्यवाक्षीत्। मनसोद्गात्रा दीक्षामहा इति ॥५॥ ते मनसोद्गात्राऽदीक्षन्त । स यदेव मनसा ध्यायति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ॥६॥ तत्पाप्माऽन्वसृज्यत । स यदेव मनसा पापं ध्यायति स एव स पाप्मा ॥७॥ तेऽब्रुवन्[4] नो न्वाव[5] नोऽयम् मृत्युं[3] न पाप्मानमत्यवाक्षीत्[6] । चक्षुषोद्गात्रा दीक्षामहा इति ॥८॥ ते चक्षुषोद्गात्राऽदीक्षन्त । स यदेव चक्षुषा पश्यति तदात्मन[7] आगायदथ य इतरे कामास्तान्देवेभ्यः ॥९॥ तत्पाप्माऽन्वसृज्यत । स यदेव चक्षुषा पापम्पश्यति ( स एव स पाप्मा ) ॥१०॥ तेऽब्रुवन्नोन्वाव

---

१–म । २ 'य' अधिक है । ३–त्यु । ४ ब्रवीन् । ५ न्व । ६ अवत्यव–। ७–मान्–।

नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत्। श्रोत्रेणोद्गात्रा दीक्षामहा इति ॥१.११॥ ते श्रोत्रेणोद्गात्राऽदीक्षन्त। स यदेव श्रोत्रेण शृणोति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः ॥१.१२॥ तत्पाप्मा-ऽन्वसृज्यत। स यदेव श्रोत्रेण पापं शृणोति स एव स पाप्मा ॥१.१३॥ तेऽब्रुवन्नो न्वाव नोऽयम् मृत्युं न पाप्मानमत्यवाक्षीत्। अपानेनोद्गात्रा दीक्षामहा इति ॥१.१४॥ तेऽपानेनोद्गात्राऽदीक्षन्त। स यदेवाऽपानेनाऽपानिति तदात्मन आगायदथ य इतरे कामा-स्तान्देवेभ्यः ॥१.१५॥ तम्पाप्माऽन्वसृज्यत। स यदेवाऽपानेन पापं गन्धमपानिति स एव स पाप्मा ॥१.१६॥ तेऽब्रुवन्नो न्वाव नोऽयम्-मृत्युं न पाप्मानमत्यवाक्षीत्। प्राणेनोद्गात्रा दीक्षामहा इति॥१.१७॥ ते प्राणेनोद्गात्राऽदीक्षन्त। स यदेव प्राणेन प्राणिति तदात्मन आगायदथ य इतरे कामास्तान्देवेभ्यः॥१.१८॥ तम्पाप्मा नाऽन्वसृज्यत। न ह्येतेन प्राणेन पापं वदति न पापं ध्यायति न पापम्पश्यति न पापं शृणोति न पापं गन्धमपानिति॥१.१९॥ तेनाऽपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन्। अपहत्य हैव मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद ॥२०॥ २१॥

प्रथमेऽनुवाके प्रथमः खण्डः।

---

८ अपानिति।

सा या सा वागासीत्सोऽग्निरभवत् ॥१॥ अथ यत्तन्मन आसीत् स चन्द्रमा अभवत् ॥२॥ अथ यत्तच्चक्षुरासीत् स आदित्योऽभवत् ॥३॥ अथ यत्तच्छ्रोत्रमासीत्ता इमा दिशोऽभवन्। ता उ एव विश्वेदेवाः ॥४॥ अथ यस्सोऽपान आसीत्स बृहस्पतिरभवत्। यदस्यै वाचो बृहत्यै पतिस्तस्माद्बृहस्पतिः ॥५॥ अथ यस्स प्राण आसीत्स प्रजापतिरभवत्। स एष पुत्री प्रजावानुद्गीथो[1] यः प्राणः। तस्य स्वर एव प्रजाः। प्रजावान्भवति य एवं वेद ॥६॥ तं हैतमेके प्रसत्तमेव गायन्ति प्राणा३प्राणा३प्राणा३ हुम्भा ओवा इति ॥७॥ तदु होवाच शाट्यायनिस्तत एतमर्हति प्रसत्तं गातुम्। यद्वाव वाचा करोति तदेतद्देवाऽस्य कृतम्भवतीति ॥८॥ अथ वा अत[2] ऋक्सामोरेव प्रजातिः। स यद्धिङ्करोत्यभ्येव तेन क्रन्दति[3]। अथ यत्प्रस्तौ[4]त्यैव तेन प्लवते। अथ यदादिमादत्ते रेत एव तेन सिञ्चति। अथ यदुद्गायति रेत एव तेन सिक्तं सम्भावयति[5]। अथ यत्प्रतिहरति रेत एव तेन सम्भूतम्प्रवर्धयति। अथ यदुपद्रवति रेत एव तेन प्रवृद्धं विकरोति। अथ यन्निधनमुपैति रेत एव तेन विकृतम्प्रज-

---

१ यत्। २ प्रतम, प्रथ। ३ कुर्वंति। ४ प। ५-भेद्-, नास्ति प्रति। प्रथ यत्प्रतिहरति।

नयति । सैषर्क्साम्नोः प्रजातिः ॥९॥ स य एवमेतामृक्साम्नोः प्रजातिं वेद प्र हैनमृक्सामनी जनयतः ॥१०॥ २१२॥

प्रथमेऽनुवाके द्वितीयः खण्डः । प्रथमोऽनुवाकस्समाप्तः ॥

———:०:———

एष एवेदमग्र आसीत्[1] एष तपति । स एष सर्वेषाम्भूतानां[2] तेजो हर इन्द्रियं वीर्यमादायोर्ध्व उदक्रामत ॥१॥ सोऽकामयतै-कमेवाऽक्षरं स्वादु[3] मृदु देवानां[4] वनामीति[5] ॥२॥ स तपोऽतप्यत । स तपस्तप्त्वै[6]कमेवाऽक्षरमभवत्[7] ॥३॥ तं देवाश्चर्षयश्चोपसमैप्सन् । अथैषोऽसुरान्भूतहनोऽसृजतैतस्य पाप्मनोऽनन्वागमाय ॥४॥ तं वाचोपसमैप्सन् । ते वाचं समारोहन् । तेषां वाचम्पर्यादत्त । तस्मात्पर्यात्ता वाक् । सत्यं च ह्येनया वदत्यनृतं च ॥५॥ तम्म-नसोपसमैप्सन् । ते मनस्समारोहन् । तेषाम्मनः पर्यादत्त । तस्मात्पर्यात्तम्मन[ः]स् । पुण्यं च ह्येनेन ध्यायति पापं च ॥६॥ तं चक्षुषोपसमैप्सन् । ते चक्षुस्समारोहन् । तेषां चक्षुः पर्य्यादत्त । तस्मात्पर्यात्तं[8] चक्षुः । दर्शनीयं च ह्येनेन पश्यत्यदर्शनीयं च ॥७॥

९ साम्नोः, क्साम्नोः ।

१ स । २ न्बा । ३ मदु । ४ नास्ति । ५ प्रति । ६ पेवा । ७ 'उदेवामाम' पूर्व से पुनः है । ८ पर्य्यत्तं ।

तं श्रोत्रेणोपसमैप्सन् । ते श्रोत्रं समारोहन् । तेषां श्रोत्रम्पर्यादत्त । तस्मात्पर्यात्तं[1] श्रोत्रम् । श्रवणीयं चैनेन शृणोत्यश्रवणीयं च ॥८॥ तमपानेनोपसमैप्सन् । तेऽपानं समारोहन् । तेषामपानम्पर्यादत्त । तस्मात्पर्यात्तोऽपानः । सुरभि च ह्येनेन जिघ्रति दुर्गन्धि च ॥९॥ तम्प्राणेनोपसमैप्सन् । तम्प्राणेनोपसमाप्नुवन् ॥१०॥ अथाऽसुरा भूतहन आद्रवन्मोहयिष्याम इति मन्यमानाः ॥११॥ स यथाऽश्मानमृत्वा लोष्टो विध्वंसेतैवमेवाऽसुरा व्यध्वंसन्त । स एषोऽश्माऽऽखणो यत्प्राणः ॥१२॥ स यथाऽश्मानमाखणमृत्वा लोष्टो विध्वंसत एवमेव स विध्वंसते य एवं विद्वांसमुपवदति ॥१३॥ ८।३॥

इति तृतीयेऽनुवाके प्रथमः खण्डः ।

स एष वशी दीक्षाग्र उद्गीथो यत्प्राणः[1] । एष हीदं सर्वं वशेकुरुते ॥१॥ वशी भवति वशे[2] स्वान्कुरुते य एवं वेद । अस्य ह्यसावग्रे दीप्यते[3]३ अमुष्य[4] वासः ॥२॥ तं हैतमुद्गीथं शाट्यायनिराचष्टे वशी दीक्षाग्र इति । दीक्षाग्रा ह वा अस्य कीर्तिर्भवति य एवं वेद ॥३॥ आभूतिरिति कारीरादयः प्राणं वा अनुप्रजाः पशव आभवन्ति । स य एवमेतमाभूतिरित्युपास्त एव प्राणेन प्रजया पशुभिर्भवति ॥४॥

---

१ पर्यात्त, पर्य्याप्तं ।

१ एषां तं ह इदं सर्वं वशेकुरुते ऐसा पाठ देते हैं। २—शो ।
३ ऽमुष्य—। ४ वतः ।

सम्भूतिरिति सात्ययज्ञयः । प्राणं वा अनु प्रजाः पशवस्सम्भवन्ति । स य एवमेतं सम्भूतिरित्युपास्ते सम्भ[व]त्याणेन प्रजया पशुभिर्भवति ॥५॥ प्रभूतिरिति शैतयाः । प्राणं वा अनु प्रजाः पशवः प्रभवन्ति । स य एवमेतं प्रभूतिरित्युपास्ते प्रैव प्राणेन प्रजया पशुभिर्भवति ॥६॥ भूतिरिति भाल्लविनः । प्राणं वा अनु प्रजाः पशवो भवन्ति । स य एवमेतं भूतिरित्युपास्ते भवत्येव प्राणेन प्रजया पशुभिः ॥७॥ अपरोधोऽनपरुद्ध इति पार्ष्णिश्शैलनः । एष ह्यन्यमपरुणद्धि नैतमन्यः । एष ह वाऽस्य द्विषन्तम्भ्रातृव्यमपरुणद्धि य एवं वेद ॥८॥२॥

द्वितीयेऽनुवाके द्वितीयः खण्डः ।

एकवीर इत्यारुणेयः । एको ह्येवैष वीरो यत्प्राणः । आ हाऽस्यैको वीरो वीर्यवाञ्जायते य एवं वेद ॥१॥ एकपुत्र इति चैकितानेयः । एको ह्येवैष पुत्रो यत्प्राणः ॥२॥ स उ एव द्विपुत्र इति । द्वौ हि प्राणापानौ ॥३॥ स उ एव त्रिपुत्र इति । त्रयो हि प्राणोऽपानो व्यानः ॥४॥ स उ एव चतुष्पुत्र इति । चत्वारो हि प्राणोऽपानो

---

५–भूर् । ६ शलि– । ७ 'प्रजया' अधिक है । ८ भूर् । ९ अपरोद्धा । १०–णद्धि । ११ से । १२–त । १३–र्वं नू– ।

१–रु । २ त्यु । ३–णेय, 'एकः' के स्थान में सर्वत्र 'एका' । ४–र । ५ द्विपू– ।

व्यानस्समानः ॥५॥ स उ एव पञ्चपुत्र इति। पञ्च हि प्राणो[६]ऽपानो व्यानस्समानोऽवानः ॥६॥ स उ एव षट्पुत्र इति। षड्ढि[७] प्राणोऽपानो व्यानस्समानोऽवान उदानः ॥७॥ स उ एव सप्तपुत्र इति सप्त हीमे शीर्षण्याः प्राणाः ॥८॥ स उ एव नवपुत्र इति सप्त हि शीर्षण्याः[८] प्राणा द्वाववाञ्चौ ॥९॥ स उ एव दशपुत्र इति। सप्तशीर्षण्याः प्राणा द्वाववाञ्चौ नाभ्यां दशमः ॥१०॥ स उ एव बहुपुत्र[९] इति। एतस्य[१०] हीयं सर्वाः प्रजाः ॥११॥ एतं ह स्म वैतदुद्गीथं विद्वांसः पूर्वे ब्राह्मणाः कामागायिन[११] आहुः कति ते पुत्रानागास्याम इति ॥१२॥२५॥

इति द्वितीयेऽनुवाके तृतीयः खण्डः।

स यदि ब्रूयादेकं[१] म आगायेति प्राण उद्गीथ इति विद्वानेकम्मनसा ध्यायेत्। एको हि प्राणः। एको हाऽस्याऽऽजायते ॥१॥ स यदि ब्रूयाद्द्वौ म आगायेति प्राण उद्गीथ इत्येव विद्वान्द्वौ मनसा ध्यायेत्। द्वौ[२] हि प्राणापानौ द्वौ[३] [२] हेवाऽस्याऽऽजायेते[४]॥२॥स यदि ब्रूयात्त्रीन्म[५] आगायेति प्राण उद्गीथ इत्येव विद्वाँस्त्रीन्मनसा ध्यायेत्। त्रयो हि प्राणो

---

६—णा। ७ अभि। ८—ण्यां। ९ वसुपुत्र। १० यम, दयम। ११—गीन॥

१ ऐक—। २ त्रयो। ३ 'व्यानः' अधिक है। ४ 'स हैवास्याऽऽजायन्ते' अधिक है। ५ मन।

ऽपानोव्यानः। त्रयो हैवाऽस्याऽऽजायन्ते ॥३॥ स यदि[६] ब्रूयाच्चतुरो म आगायेति प्राणा उद्गीथ इत्येव विद्वाँश्चतुरो मनसा ध्यायेत्। चत्वारो हि प्राणोऽपानो व्यानस्समानः[६]। चत्वारो हैवास्याऽऽजायन्ते ॥४॥ स यदिब्रूयात्पञ्च म आगायेति प्राणाउद्गीथइत्येव विद्वान्पञ्चमनसा ध्यायेत्। पञ्चहिप्राणोऽपानो व्यानस्समानोऽवानः। पञ्च हैवाऽस्याऽऽजायन्ते ॥५॥ स यदि ब्रूयात् षण्म आगायेतिप्राणाउद्गीथ इत्येव विद्वान् षण्मनसा ध्यायेत्। षाड्[७] प्राणोऽपानोव्यानस्समानोऽवान उदानः। षड्[८]ढैवाऽस्याऽऽजायन्ते ॥६॥ स यदि ब्रूयात्सप्तम आगायेति प्राणाउद्गीथ इत्येव विद्वान् सप्तमनसा ध्यायेत्। सप्त हीमे शीर्षण्याः प्राणाः। सप्त हैवाऽस्याऽऽजायन्ते ॥७॥ स यदि ब्रूयान्नव म आगायेति प्राणउद्गीथ इत्येव विद्वान्नव मनसा ध्यायेत्। सप्त शीर्षण्याः प्राणा द्वाववाञ्चौ। नव हैवाऽस्याऽऽजायन्ते ॥८॥ स यदिब्रूयाद्दश म आगायेति प्राणउद्गीथ इत्येव विद्वान्दश[९] मनसा ध्यायेत्। सप्त शीर्षण्याः प्राणा द्राववाञ्चौ नाभ्यां दशमः। दश हैवाऽस्याऽऽजायन्ते ॥९॥ स यदिब्रूयात्सहस्रम्म आगायेति प्राणउद्गीथ इत्येव विद्वान् सहस्रम्मनसा ध्यायेत। सहस्रं हैत आदित्यरश्मयः। तेऽस्य[१०] पुत्रः। सहस्रंहैवाऽस्याऽऽजायन्ते ॥१०॥ एवं[११] हैवैतमुद्गीथ

---

६ नास्ति। स यदि······व्यानस्स्। ७ भि। ८ हे। ९ द्वा। १० त। ११ ह।

त्र्य आरुणाः कक्षीवाँस्त्रसदस्युरिति पूर्वे महाराजाश्श्रौ[12]त्रियास्तद्-न्वनुत्रसुरानिषेदुः । ते ह सर्व एव सहस्रपुत्रा आसुः ॥११॥ स य[13] एवं वेद सहस्रं हैवाऽस्य पुत्रा भवन्ति ॥१२॥ २।६॥

द्वितीयेऽनुवाके चतुर्थः खण्डः । द्वितीयोऽनुवाकस्समाप्तः ।

---

शर्यातो[1] वै मानवः प्राच्यां स्थल्याम[2]यजत[3] । तस्मिन् ह भूमा-न्युद्गीथेऽपि[4]त्वमों[5]परे ॥१॥ तं देवा बृहस्पतिनोद्गात्रा दीक्षामहा इति पुरस्तादागच्छन्नयं त उद्गास्यतीति । अम्बेनाऽऽजद्विषे[6]ण पितरो दक्षिणतो[7]ऽयं त उद्गायत्विस्युशनसा काव्येना[8]ऽसुरा[9]ः पश्चाद[10]यं त उद्गायत्विगयाहरे[11]नाऽऽङ्गिरसेन मनुष्या उत्तरतो-ऽयं त उद्गायत्विति ॥२॥ स हे[12]क्षांचक्रे हन्तैनान् पृच्छानि कियतो[12] वा एक ईशे कियत एकः कियत एक इति ॥३॥ स होवाच बृहस्पतिं[13] यन्मेत्वमुद्गायेः किं ततस्स्यादि[14]ति ॥४॥ स[15] होवाच देवे-ष्वेव श्रीस्स्याद्देवेष्वीशा स्वर्गमुत्वांल्लोकं गमयेयमिति ॥५॥ अथ होवाच अम्बमाजद्विषं यन्मेत्वमुद्गायेः किं ततस्स्यादिति ॥६॥ स

---

१२ ऽश्रो । १३ यद् ।

१ शैर्ग्या- २ स्थालगाम् । ३ अजैयत । ४ ऽपिसक्रम । ५ पेशिरे । ६ विश्व- । ७ दक्षिणातो । ८ कांव्येना । ९-रां १० श्चातः । ११ अगांङ्गरसेन, अवंङ्गिरसेना । १२ कियं । १३ -तिः । १४ 'अयम्' अधिक है । १५ नास्ति, स होवाच ........ ततस्स्यादिति ।

होवाच पितृष्वेव श्रीस्स्यात्पितृष्वीशा स्वर्गमु त्वां लोकं गमयेयमिति ॥७॥ अथ होवाचोशनसं काव्यं[16] यन्मे[17] त्वमुद्गायेः किं ततस्स्यादिति ॥८॥ स होवाचाऽसुरेष्वेव श्रीस्स्यादसुरेष्वीशा स्वर्गमु[18] त्वां लोकं गमयेयमिति ॥९॥ अथ होवाचाऽयास्यमाङ्गिरसं यन्मे त्वमुद्गायेः[19] किं ततस्स्यादिति ॥१०॥ स होवाच देवानेव देवलोके दध्याम्[20]मनुष्यान्मनुष्यलोके पितॄन्[21] पितृलोके नुदेयाऽस्माल्लोकादसुरान्[22] स्वर्गमु त्वां लोकं गमयेयामिति ॥११॥२।७॥

तृतीयेऽनुवाके प्रथमः खण्डः ।

स होवाच त्वं मे भगव उद्गाय य एतस्य सर्वस्य यशो[1][ ऽसी ]ति ॥१॥ तस्य हाऽयास्य एवोज्जगौ । तस्मादुद्गाता हृत उत्तरतो निवेशनं लिप्सेत । एतद्ध नाऽऽरूद्ध निवेशनं यदुत्तरतः ॥२॥ उत्तरत आगतो यास्य आङ्गिरसश्शर्या[4]तस्य मानवस्योज्जगौ । स प्राणेन देवान्देवलोकेऽदधादपानेन मनुष्यान्मनुष्यलोके व्यानेन पितॄन्[2] पितृलोके हिङ्कारेण वज्रेणाऽस्माल्लोकादसुराननुदत ॥३॥ तान् होवाच दूरं गच्छतेति । स दूरो ह नाम लोकः । तं ह जग्मुः । त एतेऽसुरा असम्भाव्यं[3]पराभूताः ॥४॥ छन्दोभिरेव वाचा

---

१६ य । १७ जे । १८-शाः । १९ न्वं । २०-ध्यात् । २१-ईव । २२ 'ऽ' अधिक है । २३ हे ॥

१-शस । २-तृन् । ३ असंख्येयम- ।

श[4]यतिम्मानवं स्वर्गं लोकं गमयांचकार ॥५॥ ते होचुरसुरा एत तं वेदाम यो नोऽयमित्थमधत्तेति । तत[5] आगच्छन्[6] । तमेत्याऽपश्यन् ॥६॥ तेऽब्रुवन्नयं वा आस्य इति । यदब्रुवन्नयं वा आस्य इति तस्मादयमास्यः । अयमास्यो[7] ह वै नामैषः । तमयास्य इति परोक्षमाचक्षते ॥७॥ स प्राणो वा अयास्यः । प्राणो ह वा एनान् स नुनुदे ॥८॥ स य एवं विद्वानुद्गायति प्राणेनैव देवान्देवलोके दधात्यपानेन[8] मनुष्यान्[10]मनुष्यलोके व्यानेन पितॄन्[2] पितृलोके हिङ्कारेणैव[9] वज्रेणाऽस्माल्लोकाद्द्विषन्तम्भ्रातृव्यं नुदते ॥९॥२॥८॥

तृतीयेऽनुवाके द्वितीयः खण्डः ।

तं ह ब्रूयाद्दूरं गच्छेति । स यमेव लोकमसुरा अगच्छंस्तं[1] हैव गच्छति ॥१॥ छन्दोभिरेव वाचा यजमानं स्वर्गं लोकं गमयति ॥२॥ ता एता व्याहृतयः[2] । प्रेत्येति वाग्[इति]भूर्भुवस्स्वरित्य्[उदिति]॥३॥ तद्यत्प्रेति तत्प्राणस्तदयं[3] लोकस्तदिमं लोकमस्मिँलोक आभजति ॥४॥ एत्यपानस्तदसौ लोकस्तदमुं लोकममुष्मिँलोक आभजति ॥५॥ वागिति तद्ब्रह्म तदिदमन्तरिक्षम् ॥६॥ भूर्भुवस्स्वरिति सा त्रयीविद्या ॥७॥ उदिति सोऽसावादित्यः । तद्यदुदित्युदिव श्लेष-

---

४ शॅय्या- । ५ त । ६-त्स्य । ७-असो । ८ पान्- । ९ पर्हिङ्- । १०-ष्यान् ॥

१-आ । २ स्या- । ३ सत् ।

यति[४] ॥८॥ तद्यदेकमेवाऽभिसम्पद्यते तस्मादेकवीरः । एको ह तु सन्वीरो वीर्यवान् भवति । आहाऽस्यैको[५] वीरो वीर्यवान्[६] जायते य एवं वेद ॥९॥ तदु होवाच शाट्यायनिर्बहुपुत्र एष उद्गीथ इत्ये-[७] वोपासितव्यम् । बहवो ह्येत आदित्य[८] रश्मयस्तेऽस्य[९] पुत्राः । तस्मा-द्बहुपुत्र एष उद्गीथ इत्येवोपासितव्यमिति ॥१०॥२।९॥

तृतीयेऽनुवाके तृतीयः खण्डः । तृतीयोऽनुवाकस्समाप्तः ।

---

देवासुरास्समयतन्तेत्याहुः । न ह वै तद्देवासुरास्सम्येतिरे । प्रजापतिश्च ह वै तन्मृत्युश्च सम्येताते ॥१॥ तस्य ह प्रजापतेर्देवाः प्रियाः[१] पुत्रा अन्त आसुः । तेऽब्रियन्त तेनोद्गात्रा दीक्षामहै येना-ऽपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमियामेति ॥२॥ तेऽब्रुवन्वा-चोद्गात्रा दीक्षामहा इति ॥३॥ ते वाचोद्गात्राऽदीक्षन्त । तेभ्य[२] इदं वागागायद्यदिदं वाचा वदति यदिदं वाचा भुञ्जते ॥४॥ ताम्पाप्माऽन्वसृज्यत । स यदेव वाचा पापं वदति स एव स पाप्मा ॥५॥ तेऽब्रुवन् न वै नोऽयम्मृत्युं न पाप्मानमत्यवाक्षीत्[३] । मनसोद्गात्रा दीक्षामहा इति ॥६॥ ते मनसोद्गात्रा दीक्षन्त । तेभ्य इदम्मन

---

४ इत्येव्–।५–प।६–यावान्।७–प (इत्य)।८ आदित्यस्य।९ त ॥

१–याय।२ 'नोद्गात्रा दीक्षामहा इति' अधिक है पर 'ते' और 'भ्य' के बीच लाल रङ्ग से काटा गया है।३ अवत्य्–।

आगायद्यदिदम्मनसा ध्यायति यदिदम्मनसा भुञ्जते ॥७॥ तत्पा-
प्माऽन्वसृज्यत । स यदेव मनसा पापं ध्यायति स एव स
पाप्मा ॥८॥ तेऽब्रुवन्नोन्वाव नोऽयं मृत्युं न पाप्मानमसवाक्षीत् ।
चक्षुषोद्गात्रा दीक्षामहा इति ॥९॥ ते चक्षुषोद्गात्राऽदीक्षन्त ।
तेभ्य इदं चक्षुरागायद्यदिदं चक्षुषा पश्यति यदिदं चक्षुषा
भुञ्जते ॥१०॥ तत्पाप्माऽन्वसृज्यत । स यदेव चक्षुषा पापम्पश्यति
स एव स पाप्मा ॥११॥ तेऽब्रुवन्नोन्वाव नोऽयम्मृत्युं न पाप्मा-
नमसवाक्षीत् । श्रोत्रेणोद्गात्रा दीक्षामहा इति ॥१२॥ ते श्रोत्रेणो-
द्गात्राऽदीक्षन्त । तेभ्य इदं श्रोत्रमागायद्यदिदं श्रोत्रेण शृणोति
यदिदं श्रोत्रेण भुञ्जते ॥१३॥ तत्पाप्माऽन्वसृज्यत । स यदेव
श्रोत्रेण पापं शृणोति स एव स पाप्मा ॥१४॥ तेऽब्रुवन्नोन्वाव
नोऽयं मृ[४]त्युं न पाप्मानमसवाक्षीत्[५] । प्राणेनोद्गात्रा दीक्षामहा
इति ॥१५॥ ते प्राणेनोद्गात्राऽदीक्षन्त । तेभ्य इदं प्राण आगाय-
द्यदिदं प्राणेन प्राणिति यदिदं प्राणेन भुञ्जते ॥१६॥ तम्पाप्मा-
ऽन्वसृज्यत । स यदेव प्राणेन[ पापं ]प्राणिति स एव स
पाप्मा ॥१७॥ तेऽब्रुवन्नोन्वाव नो[६]ऽयं मृत्युं न पाप्मानमसवाक्षीत् ।
अनेन मुख्येन प्राणेनोद्गात्रा दीक्षामहा इति ॥१८॥ तेऽनेन

४–त्यु । ५ 'स' अधिक है । ६ ने ।

मुख्येन प्राणेनोद्गात्राऽऽदीक्षन्त ॥१६॥ सोऽब्रवीन्मृत्युरेष एषां स उद्गाता येन मृत्युमत्येष्यन्तीति[7] ॥२०॥ न ह्येतेन प्राणेन पापं वदति न पापं ध्यायति न पापम्पश्यति न पापं शृणोति न पापं गन्धमपानिति ॥२१॥ तेनाऽपहत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन्[8]। अपहत्य हैव मृत्युमपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद ॥२२॥२॥१०॥

चतुर्थेऽनुवाके प्रथमः खण्डः।

स यथा हत्वा प्रमृद्याऽतीयादेवमेवैतम्मृत्युमत्यायन्[1] ॥१॥ स वाचम्प्रथमामत्यवहत्। ताम्परेण मृत्युं[2] न्यदधात्। सोऽग्निरभवत् ॥२॥ अथ मनोऽत्यवहत्[3]। तत्परेण मृत्युं[2] न्यदधात्। स चन्द्रमा अभवत् ॥३॥ अथ चक्षुरत्यवहत्। तत्परेण मृत्युं[2] न्यदधात्। स आदित्योऽभवत् ॥४॥ अथ श्रोत्रमत्यवहत्। तत्परेण मृत्युं[2] न्यदधात्। ता इमा दिशोऽभवन्। ता उ एव विश्वे देवाः ॥५॥ अथ प्राणमत्यवहत्। तम्परेण मृत्युं[2] न्यदधात्। स वायुरभवत् ॥६॥ अथाऽऽत्मने[4] केवलमेवाऽन्नाद्यमागायत् ॥७॥ स एष

---

७–यम। ८ गमयन्।

१ स अधिक है, 'अत्यायन्' के स्थान में–यत्। २–यु। ३–न्। ४ वृथा।

एवाऽयास्यः । आस्ये[5] धीयते[6] । तस्मदयास्यः । यद्वेवा[7] [ऽयम्]
आस्य[8] रमते तस्माद्वेवाऽयास्यः[9] ॥८॥ स एष एवाऽऽङ्गिरसः ।
अतो हीमान्यङ्गानि रसं लभन्ते । तस्मादाङ्गिरसः[10] । यद्वेवैषा-
मङ्गानां रसस्तस्मा द्वेवाऽऽङ्गिरसः ॥९॥ तं देवा अब्रुवन् केवलं
वा आत्मनेऽन्नाद्यमागासीः । अनु न एतस्मिन्ननाद्य आभज[11] ।
एतदस्याऽनामयत्व[12]मस्तीति[13] ॥१०॥ तं वै प्रविशतेति । स वा
आकाशान्[14] कुरुष्वेति । स इमान् प्राणानाकाशान[15]कुरुत[16] ॥११॥
तं वागेव भूत्वाऽग्निः प्राविशन्[18]मनो भूत्वा चन्द्रमाश्चक्षुर्भूत्वा
ऽऽदित्यश्श्रोत्रम्भूत्वा दिशः प्राणो भूत्वा वायुः ॥१२॥ एषा वै
दैवी परिषद्दैवी सभा दैवी संसत् ॥१३॥ गच्छति ह वा एतां[17]
दैवीम्परिषदं दैवीं सभां दैवीं[17] संसदं य एवं वेद ॥१४॥२॥११॥

चतुर्थेऽनुवाके द्वितीयः खण्डः ।

यत्रो ह वैक चैता[1] देवता निस्पृशन्ति न हैव तत्र कश्चन
पाप्मान्यङ्गः परिशिष्यते ॥१॥ स विद्यान्नेह कश्चन पाप्मान्यङ्गः
परिशेक्ष्यते[2] सर्व[3]मेवै[4]ता देवताः पाप्मानं निधक्ष्यन्तीति । तथा हैव

---

५ आसे । ६ ध्यति । ७ यर्ग । ८ स्ये । ९-ांऽयास्यः । १० अङ्ग- । ११ भः । १२ आमयत्वम् । १३ असी । १४ आकाशात् । १५ आशासनम् । १६ कुरुत । १७ '-ां' नास्ति । १८ प्रवी- ॥

१ चे । २ च्यते । ३ पवम । ४ पता ।

भवति ॥२॥ य उ ह वा एवंविदमृच्छति[5][6] यथैता देवता ऋत्वा नीयादेवं न्येति[7]। एतासु हैवेनं देवतासु प्रपन्नमेतासु वसन्तमुपवदति ॥३॥ तस्य हैतस्य नैव काचनाऽऽर्तिरस्ति[8] य एवं वेद। य एवैनमुपवदति स आर्तिमार्च्छति[9] ॥४॥ स य एनमृच्छादेव[10] ता देवता उपसृत्य ब्रूयादयम्माऽऽरत[11] स इमामार्ति[12] न्येत्विति। तां हैवाऽऽर्ति न्येति ॥५॥ यावदावासा[13] उ हाऽस्येमे प्राणा अस्मिँलोक एतावदावासा[13] उ हाऽस्यैता देवता अमुष्मिँलोके भवन्ति ॥६॥ तस्मादु हैवं विद्वान्नैवाऽगृहतायै[14] बिभीयान्नाऽलोकतायै। एता मे देवता अस्मिँलोके गृहान् करिष्यन्ति। एता अमुष्मिँलोके[15] भवन्ति। तस्मादु लोकम्प्रदास्यन्तीति[16] ॥७॥ तस्मादु हैवं विद्वान्नैवाऽगृहतायै बिभीयान्नाऽलोकतायै। एता मे देवता अस्मिँलोके गृहेभ्यो गृहान् करिष्यन्ति स्वेभ्य आयतनेभ्य[17] इति हैव विद्याद् [एता] देवता[18] अमुष्मिँलोके लोकम्प्रदास्यन्तीति ॥८॥ तस्मादु हैवं

---

५–विदू वा विद। ६ दुच्छति। ७ नेति। ८–तीर्। ९ आकृच्छति। १० एम। ११ रात। १२ अत्ति। १३–दावशा। १४ग्रह–। १५ अस्मिल्। १६ प्रवदा–। १७ 'आयतनेभ्य' अधिक है। १८ एव ता॥

विद्वान्नैवाऽस्पृहतायै विभीयान्नाऽलोकतायै एता म एतदुभयं संनंस्यन्तीति हैव विद्यात्। तथा हैव भवति ॥६॥२।१२॥

चतुर्थेऽनुवाके तृतीयः खण्डः। चतुर्थोऽनुवाकस्समाप्तः।

---

देवा वै ब्रह्मणो वत्सेन[1] वाचमदुहन्। अग्निर्ह वै ब्रह्मणो वत्सः॥१॥सा या सावाग्ब्रह्मैव तत्। अथ योऽग्निर्मृत्युस्सः॥२॥ तामेतां वाचं यथा धेनुं वत्सेनोपसृज्य[2] प्रत्तां दुहीतैवमेव देवा वाचं सर्वान्कामानदुहन्[3] ॥३॥ दुहे[4] ह वै वाचं सर्वान्कामान्य एवं वेद। स हैषोऽनानृतो वाचं देवीमुदिन्धे[5] वद वद वदेति ॥४॥ तद्यदिह[6] पुरुषस्य पापं कृतम्भवति तदाविष्करोति। यदिहैनदपि रहसीव कुर्वन्मन्यतेऽथ[7][8] हैनदाविरेव करोति। तस्माद्वाव पापं न कुर्यात्[9] ॥५॥२।१३॥

पञ्चमेऽनुवाके प्रथमः खण्डः।

एष उ ह वाव देवानां नेदिष्ठमुपचर्यो यदग्निः ॥१॥ तं साधूपचरेत्। य एनमस्मिँल्लोके साधूपचरति[1] तमेषोऽमुष्मिँल्लोके

---

१ पत्तेन, पत्सेन। २ वद्य-। ३-र। ४ अहे। ५ उदिग्धे। ६ अमिह। ७-त। ८ अथ-। ९ 'एष उ ह वा' दूसरे अनुवाक का यहां अधिक है॥

१ चरति।

साधूपचरति । अथ य एनमस्मिँल्लोके नाऽऽद्रियते तमेषोऽमुष्मिँ-
ल्लोके नाऽऽद्रियते । तस्माद्वा अग्निं साधूपचरेत् ॥२॥ तं नैव
हस्ताभ्यां स्पृशेन्न पादाभ्यां न दण्डेन[२] ॥३॥ हस्ताभ्यां स्पृशति
यदस्याऽन्तिकमवनेनिक्ते । अथ यदभिप्रसारयति तत्पादा-
भ्याम् ॥४॥ स एनमास्पृष्ट ईश्वरो दुर्धायां धातोः । तस्माद्वा
अग्निं साधूपचरति । सुधायां हैवैनं दधाति ॥६॥२।५।४॥

पञ्चमेऽनुवाके द्वितीयः खण्डः ।

एष उ ह वाव देवानाम्महाशनतमो यदग्निः ॥१॥ तस्य
व्रत्य[१]मदद[२]ानोऽश्नीयात् । यो वै महाशनेऽनश्नत्यश्नातीश्वरो हैनम-
भिष[३]ङ्क्तोः । पू[४]तिमिव[५] हाऽश्नीयात्[६] ॥२॥ अथो ह प्रोक्तेऽशने ब्रूयात्
समिन्त्स्वाऽग्निमिति । स यथा प्रोक्तेऽशने श्रेयाँसम्परिवेष्टवै
ब्रूयात्तादृक् तत्[७] ॥३॥ एतदु ह वाव साम यद्वाक् । यो वै चक्षु-
स्साम श्रोत्रं सामेत्युपास्ते [८]न ह तेन करोति ॥४॥ अथ य[९]
आदित्यस्साम चन्द्रमास्सामेत्युपास्ते [८]न हैव तेन करोति ॥५॥
अथ यो वाक् सामेत्युपास्ते स एवाऽनुष्ठ्या साम वेद । वाचा हि

---

२ तदण्डेनम्, तयदैनम् ।

१ प्र-। २ ददासीनो । ३ अभिष( ष )ङ्क्ताः ।
४-हर । ५ इवमिव । ६ ऽश्नी-। ७ तम् । ८ ना । ९ यद् ।

साम्नाऽऽर्त्विज्यं क्रियते ॥६॥ स यो वाचस्स्वरो जायते सोऽ ग्निर्वाग्वेव वाक् । तदेत्रैकधा[10] साम भवति ॥७॥ स य एवमेतदेकधा साम भवद्वेदैवं हैतदेकधा साम भवतीत्येकधैव श्रेष्ठस्स्वानाम्भवति ॥८॥ तस्मादु हैवंविदमेव साम्नाऽऽर्त्विज्यं कारयेत । स ह वाव साम वेद य एवं वेद ॥६॥२।१५॥

पञ्चमेऽनुवाके तृतीयः खण्डः । पञ्चमोऽनुवाकस्समाप्तः ॥

---

१० एत्र—।

# [ तृतीयोऽध्यायः । ]

एका ह वाव कृत्स्ना देवताऽर्धदेवता एवाऽन्याः । अयमेव योऽयम्पवते ॥१॥ एष एव सर्वेषां देवानां ग्रहः ॥२॥ स हैषोऽस्तं नाम । अस्तमिति हेह पश्चाद्[1]ग्रहानाचक्षते ॥३॥ स यदादित्योऽस्तमगादिति ग्रहानगादिति हैतत् । तेन सोऽसर्वः । स एतमेवाऽप्येति ॥४॥ अस्तं चन्द्रमा एति । तेन सोऽसर्वः । स एतमेवाऽप्येति ॥५॥ अस्तं नक्षत्राणि यन्ति । तेन तान्यसर्वाणि । तान्येतमेवाऽपियन्ति ॥६॥ अन्वग्निर्गच्छति । तेन सोऽसर्वः । स एतमेवाऽप्येति ॥७॥ एत्यहः । एति रात्रिः[2] । तेन ते असर्वे । ते एतमेवाऽपीतः[3] ॥८॥ मुह्यन्ति दिशो न वै ता[4] रात्रिम्प्रज्ञायन्ते । तेन ता असर्वाः । ता एतमेवाऽपियन्ति ॥९॥ वर्षति च पर्जन्य उच्च गृह्णाति । तेन सोऽसर्वः[5] । स एतमेवाऽप्येति ॥१०॥ क्षीयन्त आप एवमोषधय[6] एवं वनस्पतयः । तेन तान्यसर्वाणि । तान्येतमेवाऽपियन्ति ॥११॥ तद्यदेतत्सर्वं वायुमेवाऽप्येति तस्माद्वा-

---

१ पँचा । २–रः । ३–ताः । ४ तां । ५ 'स साम वेद' अधिक है ।
६ [illegible]–, ओषा– ।

युरेव साम ॥१२॥ स ह वै सामवित्स [कृत्स्नं] साम वेद य एवं वेद ॥१३॥ अथाऽध्यात्मम् । न वै स्वपन् वाचा वदति[7]। सेयमेव प्राणमप्येति ॥१४॥ न मनसा ध्यायति । तदिदमेव प्राणमप्येति[8] ॥१५॥ न चक्षुषा पश्यति । तदिदमेव प्राणमप्येति ॥१६॥ न श्रोत्रेण शृणोति । तदिदमेव प्राणमप्येति ॥१७॥ तद्यदेतत्सर्वं प्राणमेवाऽभिसमेति तस्मात्प्राण एव साम ॥१८॥ स ह वै सामवित्स कृत्स्नं साम वेद य एवं वेद ॥१९॥ तद्यदिदमाहुर्न वाताऽद्य वातीति[स] हैतत्पुरुषेऽन्तर्निरमते[9] स पूर्णः[10] स्वेदमान आस्ते ॥२०॥ तद्ध शौनकं[11] च कापेयमभिप्रतारिणं च[काक्षसेनिम्] ब्राह्मणः परिविविष्यमाणा[12] उपावव्राज[13] ॥२१॥३।१॥

प्रथमेऽनुवाके प्रथमः खण्डः ।

तौ ह बिभिक्षे[1] । तं ह नाऽऽदद्राते[2] को वा कोवेति मन्यमानौ ॥१॥ तौ होपजगौ ।

महात्मनश्चतुरो देव एकः कस्स[3] जगार भुवनस्य गोपाः ।
तं कापेय[4] न विजानन्त्यकेऽभिप्रतारिन् बहुधा निविष्टम्[5] ॥

---

७ ऽमम । ८-यति । ९-मिते । १०-र्णा । ११-काश । १२ विष्या-। १३-प्राजा ॥

१ भिक्षे-। २ द्राते । ३ स्वे । ४ काक्षपेय । ५ निविन्दम ।

इति ॥२॥ स होवाचाऽभिम[६]तारीमं[७] वाव प्रपद्य प्रतिगृहीतिं । त्वया[८] वा[९] अयम्प्रत्युच्य[१०] इ[११]ति ॥३॥ तं ह प्रत्[१२]युवाच—

> आत्मा देवानामुत मर्त्या[१३]नां हिरण्यदन्तो र[१४]पसो न[१५] सूनुः ।
> महान्तमस्य महि[१६]मानमाहुरनद्यमानो य[१७]द[१८]दन्त[१९]मत्ति ॥

इति ॥४॥ महात्मनश्चतुरो [देव] एक इति । वाग्वा[२०] अग्निः[२१] । स महात्मा देवः । स यत्र स्वपि[२२]ति तद्वाचम्प्राणो गिरति ॥५॥ मनश्चन्द्रमास्स महात्मा देवः । स यत्र स्वपिति त[२३]न्मनः प्राणो गिरति ॥६॥ च[२४]क्षुरादित्यस्स महात्मा देवः । स यत्र स्वपिति तच्चक्षुः प्राणो गिरति ॥७॥ श्रोत्रं दिशस्ता[२५] महात्मानो देवाः । स यत्र स्वपिति तच्छ्रोत्रं प्राणो गिरति ॥८॥ तद्यन्महात्मनश्चतुरो देव एक इत्येतद्ध तत् ॥९॥ क[२६]स्स[२७] जगा[२८]रेति । प्रजापतिर्वै कः । स हैतज्जगार ॥१०॥ भुवनस्य गोपा इति । स उ वाव भुवनस्य गोपाः ॥११॥ तं का[२९]पेय न विजानन्त्येक इति । न ह्येतमेके विजानन्ति ॥१२॥ अभिमतारिन् बहुधा निविष्टमिति । बहुधा ह्येवैष निविष्टो यत्प्राणः ॥१३॥ आत्मा देवानामुत[३०] मर्त्यानामिति । आत्मा ह्येष देवाना-

---

६—म(अ)म, मा । ७ वय्या, यय्या । ८ अया । ९ वाय । १०—युच्चे । ११ ऽति । १२—याच । १३ मत्य्— । १४ परसो । १५ नु । १६ मभि— । १७ यदि । १८ दतम, दँतम । १९ अँति । २० पाप्, वा । २१ या । २२ स्वतिपिति । २३—न्न, इस के पश्चात् प्रा । २४—क्षर् । २५ महात्मा अधिक है । २६ क । २७ सो । २८ जगॅर— । २९—पेय । ३०—मो ।

भुव मर्त्यानाम् ॥१४॥ हिरण्यदन्तो रपसो न सूनुरिति । न ह्येष सूनुः । सूनुरूपो ह्येष सन्न सूनुः ॥१५॥ महान्तमस्य महिमानमाहुरिति । महान्तं ह्येतस्य महिमानमाहुः ॥१६॥ अनद्यमानो यददन्नमत्तीति । अनद्यमानो ह्येषोऽदन्तमत्ति ॥१७॥३।२॥

प्रथमेऽनुवाके द्वितीयः खण्डः ॥

तस्यैष श्रीरात्मा समुद्गूढो यदसावादित्यः । तस्माद्गायत्रस्य स्तोत्रेणाऽवान्याभिष्टिक्रया अवद्धियां इति ॥१॥ स एष एवोक्थम् । यत्पुरस्तादवानिति तदेतदुक्थस्य शिरो यद्दक्षिणतस्स दक्षिणः पक्षो यदुत्तरतस्स उत्तरः पक्षो यत्पश्चात् [तत्]पुच्छम् ॥२॥ अयमेव प्राण उक्थस्याऽऽत्मा । स य एवमेतमुक्थस्याऽऽत्मानमात्मन्प्रतिष्ठितं वेद स हाऽमुष्मिँ लोके साङ्गस्सतनुस[सर्वस्]सम्भवति ॥३॥ अश्वद्ध वा अमुष्मिँल्लोके यदिदम्पुरुषस्याऽऽण्डौ शिश्नं कर्णौ नासिके यत्किं चाऽनस्थिकं न सम्भवति ॥४॥ अथ य एवमेतमुक्थस्याऽऽत्मानमात्मन्प्रतिष्ठितं वेद स हैवाऽमुष्मिँल्लोके साङ्गस्सतनुस्सर्वस्सम्भवति ॥५॥ तदेतद्वैश्वामित्रमुक्थम् । तदन्नं वै विश्वम्प्राणो मित्रम्

३१ -से । ३२ नस् । ३३ स् । ३४ आहुर् । और 'इति महान्तं ह्येतस्य महिमाहुः' अधिक है । ३५ -न्तम । ३६ सूनुर्-॥

१ समाद्-। २ वद्धिय-। ३ वा इति । ४-द्दा: । ५ सद्ध । ६ सद्ध । ७ सांप्सस । ८-न्तद्ध । ९ अपक्षु-।

॥६॥ वद्ध विश्वामित्रश्श्रमेण तपसा व्रतचर्येणेन्द्रस्य[10] प्रियं धामो-पजगाम ॥७॥ तस्मा उ हैतत्[11] प्रोवाच यदिदम्मनुष्यानामवम ॥८॥ वद्ध स उपनिषसाद ज्योतिरेतदुक्थमिति[12] ॥६॥ ज्योतिरिति द्वे अक्षरे प्राण इति द्वे अन्नमिति द्वे। तदेतदन्न एव प्रतिष्ठितम् ॥१०॥ अथ हैनं जमदग्निरुपनिषसादाऽऽयुरेतदुक्थमिति[13] ॥११॥ आयुरिति द्वे अक्षरे प्राण इति द्वे अन्नमिति द्वे। तदेतदन्न एव प्रतिष्ठितं ॥१२॥ अथ हैनं[14] वासिष्ठ उपनिषसाद गौरेतदुक्थमिति। तदेतदन्नमेव[15]। अन्नं हि गौः ॥१३॥ तदाहुर्यदस्य प्राणस्य पुरुषश्शरीरमथ केना-ऽन्ये[16] प्राणाश्शरीरवन्तो भवन्तीति ॥१४॥ स ब्रूयाद्यद्वाचा वदति तद्वाचश्शरीरं यन्मनसा ध्यायति तन्मनसश्शरीरं यच्चक्षुषा पश्यति तच्चक्षुषश्शरीरं यच्छ्रोत्रेण शृणोति तच्छ्रोत्रस्य शरीरम्। एवमु हाऽन्ये प्राणाश्शरीरवन्तो भवन्तीति ॥१५॥ ३।३॥

प्रथमेऽनुवाके तृतीयः खण्डः।

तदेतदुक्थं सप्तविधम्। शस्यते स्तोत्रियोऽनुरूपो[1] धाय्या प्रगाथस्सूक्तं निवित्परिधानीया[2] ॥ १ ॥ इयमेव[3] स्तोत्रियो

१० प्र-। ११ तदू। १२ उत्थ-। १३ (-साद) गौर, आयुर्गौर। १४-इ। १५ उ.तेंदू। १६ ऽन्येन।

१ अभिर पधिक है। २-नीयम। ३ नास्ति।

ऽग्निरनुरूपो वायुर्धाय्याऽन्तरिक्षम्प्रगाथो द्यौस्सूक्तमादित्यो निवित्।
तस्माद्बह्वृचा उदिते निविदमधीयन्ते । आदित्यो हि निवित् ।
दिशः परिधानीयेत्यधिदैवतम् ॥ २ ॥ अथाध्यात्मम् । आत्मैव
स्तोत्रियः प्रजाऽनुरूपः प्राणो धाय्या मनः प्रगाथश्शिरस्सूक्तं
चक्षुर्निविच्छ्रोत्रम्परिधानीया ॥३॥ तद्धैतदेके त्रिष्टुभा परिदधत्य-
नुष्टुभैके । त्रिष्टुभात्वेव परिदध्यात् ॥४॥ तद्धैतदेक एता व्याहृती-
रभिव्याहृत्य शंसन्ति महान्मह्या समधत्त देवो देव्या समधत्त
ब्रह्म ब्राह्मण्या समधत्त । तद्यत्समधत्त समधत्तेति ॥५॥ तस्मा-
दिदानीम्पुरुषस्य शरीराणि प्रतिसंहितानि । पुरुषो ह्येतदुक्थम्
॥६॥ महान्मह्या समधत्तेति । अग्निर्वै महानियमेव मही ॥७॥
देवो देव्या समधत्तेति । वायुर्वै देवोऽन्तरिक्षं देवी ॥८॥ ब्रह्म
ब्राह्मण्या समधत्तेति । आदित्यो वै ब्रह्म द्यौर्ब्राह्मणी ॥९॥ तासां
वा एतासां देवतानां द्वयोर्द्वयोर्देवतयोर्नव-नवाऽक्षराणि सम्पद्यन्ते ।
एतादिमे लोकास्त्रिणवा भवन्ति ॥१०॥ तद्ब्रह्म वै त्रिवृत् ।
तद्ब्रह्माऽभिव्याहृत्य शंसन्ति । एष उ एव स्तोमस्सोऽनुचरः॥११॥

---

४ द्धास्या, द्धार्य्या । ५ प्राग्-। ६ धार्य्या । ७-धात्नी-।
८ तदुक्थम् अधिक है (हाशिये में)? । ९-य । १०-मह्या । ११ इदानि ।
१२-वा । १३-यौ । १४-यो । १५-ओं । १६-कौ । १७ षा । १८ सा ।

यदिममाहुरेकस्तोम इत्ययमेव योऽयम्पवते । एषोऽधिदैवतम् । प्राणोऽध्यात्मम् । तस्य शरीरमनुचरः[११] ॥१२॥ तद्यथा ह वै मणौ मणिसूत्रं सम्प्रोतं स्याद्–॥१३।३।४॥

प्रथमेऽनुवाके चतुर्थः खण्डः ।

[१]–एवं हैतस्मिन्सर्वमिदं सम्प्रोतं गन्धर्वाप्सरसः पशवो मनुष्याः ॥१॥ तद्ध मुञ्जस्[२]सामश्रवसः[३] प्रययौ । तस्मै[४] ह श्वाजनिर्वेश्यः प्रेयाय[५] ॥२॥ तस्य हाऽन्तरिक्षात्पतित्वा नवनीतपिण्ड उरसि निपपात । तं हाऽऽदायाऽनुदधौ[६] ॥३॥ ततो[७] हैव स्तोमं ददर्शाऽन्तरिक्षे विततम्बहुशोभमानम् । तस्यो[८] ह युक्तिं ददर्श ॥४॥ बहिष्पवमानस्यासद्य टीत्र[९] विषि प्राणय इति कुर्यात् टीत्र[९] गृहित्र[१०] अपान्य इति वाचः । दिदृक्षेतैवाऽक्षिभ्यं शुश्रूषेतैव कर्णाभ्याम् । स्वयमिदम्मनोयुक्तम् ॥५॥ तद्यत्र वा इषुरत्यग्रो भवति न वै स ततो हिनस्ति[११] तदु[१२] वा एतं नोपाप्नुयात् । प इत्येवाऽपान्यात् । तद्यथा बिम्बेन मृगमानयेदेवमेवैनमेतया देवतयाऽऽनयति । स युक्तः करोति । एष[१३] एवापि युक्तः[१४] ॥६।३।५॥

प्रथमेऽनुवाके पञ्चमः खण्डः । प्रथमोऽनुवाकस्समाप्तः ॥

---

११–रन्तम् ॥

१ एवम् (एवा) के पहले पञ्चम कं० का द्वि० वाक्य । २ मौञ्ज–। ३ साहश्र–। ४ तमस्मै । ५ प्रोयाय । ६ तेतो ७–श्र । ८–इ । ९ टीत्व, पहला अक्षर ळ भी हो । १०गृहित्व । ११ग्रस्ति । हनस्ति । १२यदू । १३–षो । १४–ति ॥

ओऽसौ साम्नः श्रीर्[1] वेद श्र हास्मै दीयते ॥१॥ ददा[2] इति ह वा अयमाग्निर्दीप्यते तथेति वायुः पवते हन्तेति चन्द्रमा ओमित्यादित्यः ॥२॥ एषा ह वै साम्नः श्रीः[3]। एतां ह वै साम्नः श्रीं[4] सुदक्षिणः क्षैमिर्विदां चकार ॥३॥ तां हैतां होतुर्वाऽऽज्ये गायेन्मैत्रावरुणस्य वा तां[5] ददा३[6] तथा३ हन्ता३[7] हिम्भा ओवा इति। श्र ह वा अस्मै दीयते ॥४॥ [सो] ऽप्यन्यान्[8] बहूनुपर्युपरि[9][10] य एवमेतां साम्नः श्रीं वेद ॥५॥ य उ ह वा अबन्धुर्बन्धुमत्साम[11] वेद यत्र हाऽप्येनं न विदुर्यत्र रोषन्ति यत्र परीवचक्षते तद्धाऽपि श्रैष्ठ्यमाधिपत्यमन्नाद्यम्पुरोधाम्पर्येति[12] ॥६॥ अग्निर्ह वा अबन्धुर्बन्धुमत्साम[11]। कस्माद्धा ह्येनं दार्वोः कस्माद्धा पर्याहृत्य मन्थन्ति स श्रैष्ठ्यायाऽऽधिपत्यायाऽन्नाद्याय[13] पुरोधायै[14] जायते ॥७॥ स यत्र ह वा अप्येवंविदं न विदुर्यत्र रोषन्ति यत्र परीव[15]चक्षते तद्धाऽपि श्रैष्ठ्यमाधिपत्यमन्नाद्यम्पुरोधाम्पर्येति[16] ॥८॥३।६॥

द्वितीयेऽनुवाके प्रथमः खण्डः।

स्वयमु तत्र यत्रैनं विदुः॥१॥सुदक्षिणो ह वै क्षैमिः प्राचीनशा[1]लिर्जाबालौ ते ह सब्रह्मचारिण आसुः॥२॥ते हेमे[2] बहु जप्यस्य

---

१ प्रति। २ ददान्, ददान्। ३ श्रक्तिः, श्रवृक्तिः। ५ तौं। ६ 'हन्ता३' अधिक है। ७ नास्ति। ८ अप्य्। ९-हून्य। १०-उप। ११-धु। १२-धां। १३ श्रेष्ठ्-। १४-आये। १५ परि॥

१-शाःखिर्। २ हैं।

चाऽन्यस्य चाऽनूचिरे[3] प्राचीनशालिश्च[4] जाबालौ च ॥३॥ अथ ह स्म सुदक्षिणः[5] क्षैमिर्यद्देव यज्ञस्याञ्जो यत्सुविदितं तद्ध स्मैव पृच्छति ॥४॥ त उ ह वा अपोदिता व्याक्रोशमानाश्चे[6]रुः[7] शूद्रो दुरनूचान इति ह[8] स्म सुदक्षिणं क्षैमिमाक्रोशन्ति[9] प्राचीनशालिश्च[10] जाबालौ च ॥५॥ स ह स्माऽऽह सुदक्षिणः क्षैमिर्यत्र भूयिष्ठाः कुरुपञ्चालास्समागता भवितारस्तत्र एष संवादो नाऽनुपदिष्टे शूद्रा इव संवदिष्यामह[11] इति ॥६॥ ता उ ह वै जाबालौ दिदीक्षाते[12] शुक्रश्च गोश्रुश्च[13] । तयोर्ह प्राचीनशालिर्हैत[14] उद्गाता ॥७॥ स तद्ध सुदक्षिणोऽनुबुबुधे जाबालौ हाऽदीक्षिषातामिति[16] । स ह संग्रहीतारमुवाचा[15]-ऽऽनयस्वाऽरे[17] जाबालौ हाऽदीक्षिषातां[18] तद्गमिष्याव इति ॥८॥२॥७॥

द्वितीयेऽनुवाके द्वितीयः खण्डः ।

तस्य ह ज्ञातिका अश्रुमुखा इवाऽऽसुरन्यतरां वा भयमुपागादिति[1] ॥१॥ अथ ह स्म वै यः पुराब्रह्मवाद्यं वदत्यन्यतरामुपागादिति ह स्मेनम्मन्यन्ते । अथो ह स्मैनम्मृत्मिवैवोपासते ॥२॥ तं ह संग्रहीतोवाचाऽथ यद्भगवस्ते ताभ्यां न कुशलं

---

२ है । ३ ऽरूच– । ४–शालाथ् । ५–णा । ६ प्य– ।–श्रा । ७ चोरुश् । ८–श्रा । ९ भ्यकोश्– । १० लीश् । ११–पतिष्य– । १२ वदीन्– १३–रुश । १४ प्र– । १५ संसं– । १६ दिर्दीचि– । १७–यास्वा ॥

१–म ।

कथे[2]त्थमात्थेति ॥३॥ ओमिति होवाच गन्तव्यम्म आचार्य[3]स्तुय-मा[4]नमन्यतेति ॥४॥ स ह रथमास्थाय प्रधावयांचकार । तं ह स्म प्रतीक्षन्ते ॥५॥ कं जानीतेति । सुदक्षिण इति । न वै नूनं स इदमभ्यवेयादिति । स एवेति ॥६॥ स ह सोपानादेवाऽन्तर्वेद्यव-स्थायोवाचाऽङ्गन्वित्थं गृहपता३ इति । स ह नाऽनूदतिष्ठा-स[5]त् । स होवाचाऽनूत्थाता[6] म[7] एधि । कृष्णाजिनोऽसी[ति] । तदिमे कुरुपञ्चाला अ[8]विदुरनूत्थातैव त इति होचुः ॥७॥ तं ह कनीयान्भ्रा[9]तो[10]वाचाऽ[11]नुत्तिष्ठ । भगव उद्गातारमिति । तं हाऽनूत्तस्थौ ॥८॥ स होवाच त्रिर्वै गृहपते पुरुषो जायते । पितुरेवाऽग्रेऽधि जायतेऽथ मातुरथ यज्ञात् ॥९॥ [12]त्रि[13]र्वे[14]व [15]म्रियत इति । स यद्ध वा एनमेतत्पिता योन्यां रेतो भूतं सिञ्चति—॥१०॥३।८।

द्वितीयेऽनुवाके तृतीयः खण्डः ।

—तत्प्रथमम्म्रि[1]यते ॥१॥ अन्धमिव वै तमो योनिः । लोहि-तस्तोको वा[2] वै स तदाभवत्यपां वा स्तोकः । किं हि स[3] तदा-भवति ॥२॥ स यस्तां देवतां वेद यां च स ततोऽनुसम्भवति या

२ तु- । ३ आचेर- । ४ सुय्- । ५-ष्ठस्- । ६-ऊद्धा- । ७ म । ८ 'इति' अधिक है । ९ भ्रातो । १० वा । ११ अनुतिष्ठ । १२ त्रिव् । १३ अ, ऊ । १४ नास्ति । १५ त्रियत ॥
१ अन्ध्- । २ वो । ३ स् ।

चै[4]नं तम्मृत्युमतिवहति स उद्गाता मृत्युमतिवहतीति ॥३॥ अथ य एनमेतदीक्षयन्ति[5] ताद्द्वितीयम्म्रियते। वपन्ति केशश्मश्रूणि। निकृन्तन्ति नखान्। मत्यअ[6]न्त्यङ्गानि। मत्यचत्य[7]ङ्गुलीः। अपहृतो[8]ऽपवेष्टित[8] आस्ते। न जुहोति। न यजते। न योषितं[9] चरति। अमानुषीं वाचं वदति। मृतस्य वावैष[10] तदा रूपम्भवति ॥४॥ स यस्तां देवतां वेद यां[11] च स ततोऽनुसम्भवति या चैनं तम्मृत्युमतिवहति स उद्गाता मृत्युमतिवहतीति ॥५॥ अथ य एनमेतदस्माल्लोकात्प्रेतंचित्यामादधाति तद् तृतीयम्म्रियते॥६॥ स य[12]स्तां देवतां वेद यां च स ततोऽनुसम्भवति या चैनं तम्मृत्युमतिवहति[13] स उद्गाता मृत्युमतिवहतीति ॥७॥ एतावद्धैवो[14]क्त्वा रथमास्थाय प्रधावयांचकार ॥८॥ तं ह जाबालम्प्रत्येतं कनीयान् भ्रातोवाच[15] काम्भवा[16]ञ्छूद्रको वाचमवादीति। हस्तिना गाधमैषीरिति॥९॥ प्र हैवैनं तच्छशंस यः कथमवोचद्भगव इति। यस्त्रयाणाम्मृत्यूनां साम्नाऽतिवाहं वेद स उद्गाता मृत्युमतिवहतीति ॥१०॥३।९॥

द्वितीयेऽनुवाके चतुर्थः खण्डः।

---

४ चे। ५ दि–।६–मजत्य्। ७ यज्–। ८ मप–। ९ यौष–।१० स। ११'का' अधिक है। १२ यन्तस्म। १३–तीति। १४ वा। १५'वहतीति' अधिक है। १६–वप्॥

ते वाव भगवस्ते पितोद्गातारममन्यतेति होवाच । तदु ह प्राचीनशाला विदुर्य[2] एषामयं वृत उद्गाताऽऽस[3] । तास्मिन् ह नाऽनुविदुः ॥१॥ ते होचुरनुधावत काण्ड्वियमिति[4] । तं हाऽनुसस्रुः[5] । ते ह काण्ड्वियमुद्गातारं चक्रिरे ब्राह्मणम्प्राचीन[6]शालिम ॥२॥ तं हाऽभ्यवेद्द्योवाचैवमेष[7] ब्राह्मणो मोघाय मादाय नाऽग्लायत् । स नाऽणु साम्नोऽन्विच्छतीति[8] । ग्राति हैवैनं तच्चक्रे ॥३॥ स यद्ध[9] वा एनमेतत्पिता[10] योन्यां रेतो भूतं सिञ्चत्यादित्यो हैनं तद्योन्यां रेतो भूतं[11] सिञ्चति । स हाऽस्य तत्र मृत्योरीशे[12] ॥४॥ अथो यदेवैनमेतत्पिता योन्यां रेतो भूतं सिञ्चति[13] तद्ध वाव स ततोऽनुसम्भवति प्राणं च । यदा ह्येव रेतस्सिक्तं प्राण आविशत्यथ तत्सम्भवति[14] ॥५॥ अथो यदेवैनमेतदीक्षयन्त्यग्निर्हैवैनं तद्योन्यां रेतो भूतं सिञ्चति । स हैवाऽस्य तत्र मृत्योरीशे[15] ॥६॥ अथो यामेवैतां वैसर्जनीयामाहुतिमध्वर्युर्जुहोति तामेव स ततोऽनुसम्भवति छन्दांसि[16] चैव ॥७॥ अथ य एनमे-

---

१—प । २ विधुर् । ३ सः । ४ कान्त्यावयम् । ५—स्त्रः । ६ ब्राह्मणम् । ७—पेद्या । ८ न्वीच्—। ९ रणम् । १० नारित । ११ रत्—। १२—मो । १३ 'अथोवाच' अधिक है । १४ 'अथो य एनमेतद्दीक्षयन्त्य ......तत्रमृत्योरीशे' अधिक है । १५ 'अथो यदेवैनमेतद्दीक्षयन्ति' अधिक है । १६ ग्रासि ।

तदस्माल्लोकात्[17] प्रेतं चित्यामादधति चन्द्रमा हैवैनं तद्योन्यां रेतो भूतं सिञ्चति । स उ हैवाऽस्य तत्र मृत्योरीशे ॥८॥ अथो यदेवैनमेतदस्माल्लोकात्[17] प्रेतं[17] चित्यामादधत्यथो या एवैता अवोत्तरणीया आपस्ता एव स ततोऽनुसम्भवति[18] प्राणम्नेव । प्राणो ह्यापः ॥९॥ तं ह वा एवंविदुद्गाता यजमानमोमित्येतेनाक्षरेणाऽऽदित्यम्मृत्युमतिवहति वागित्यग्निं हुमिति वायुम्भा इति चन्द्रमसम् ॥१०॥ तान्[19] वा एतान्मृत्यून् साम्नोद्गाताऽऽत्मानं च यजमानं चाऽतिवहत्योमित्येतेनाक्षरेण प्राणेनाऽमुनाऽऽदित्येन ॥११॥

तस्यैष श्लोकः—

उतैषां ज्येष्ठ[20] उत वा किनष्ठ उतैषाम्पुत्र उत वा पितैषाम् ।
एको ह देवो मनसि प्रविष्टः पूर्वो ह जज्ञे स उ गर्भेऽन्तः—

इति ॥१२॥ तद्यदेशोऽभ्युक्त[21] इममेव पुरुषं योऽयमाक्ष्णो[22]ऽन्तरोमित्येतेनैवाक्षरेण प्राणेनैवाऽमुनैवाऽऽदित्येन[ ··· ]॥१३॥३।१०

द्वितीयेऽनुवाके पञ्चमः खण्डः । द्वितीयोऽनुवाकस्समाप्तः ॥

---

त्रिर्ह[1] वै पुरुषो म्रियते त्रिर्जायते[2] ॥१॥ स हैतदेव प्रथमम्म्रियते यद्रेतस्सिक्तं[3] सम्भूतम्भवति । स प्राणमेवाऽभिसम्भवति । आशाम-

---

१७-प्रान् । १८-वन्तीति । १९ ता । २० जैष्ठ । २१ त्यु-। २२ भक्षयन् ॥

१ हे । २ 'स हैतदेव प्रथमम्म्रियते त्रिर्जायते' अधिक है । ३ सभ-।

भिजायते ॥२॥ अथैतद्द्वितीयम्म्रियते यद्दीक्षते । स छन्दांस्येवा-ऽभिसम्भवति । दक्षिणामभिजायते ॥३॥ अथैतत् तृतीयम्म्रियते यन्म्रियते[5] । स श्रद्धामेवाऽभिसम्भवति । लोकमभिजायते ॥४॥ तदेतत् त्र्यावृद्गायत्रं[6] गायति[7] । तस्य प्रथमयाऽऽवृतेममेव[8] लोकं जयति यदु चाऽस्मिँल्लोके । तदेतेन चैनम्प्राणेन समर्धयति[9] यमभिसम्भवत्येतां चास्मा आशाम्[10] प्रयच्छति यामभिजायते ॥५॥ अथ द्वितीययाऽऽवृते-दमेवाऽन्तरिक्षं जयति यदु चान्तरिक्षे । तदेतैश्चैनं[11] छन्दोभिस्स-मर्धयति[9] यान्यभिसम्भवति । एतां चास्मै दक्षिणाम्प्रयच्छति याम-भिजायते ॥६॥ अथ तृतीययाऽऽवृताऽमुमेव लोकम् जयति यदु चाऽमुष्मिँल्लोके । तदेतया चैनं श्रद्धया समर्धयति[9] ययैवैनमेतच्छ्रद्ध-याऽऽरभ्यादधाति[12] समयामितो भविष्यतीति । एतं चास्मै लो-कम्प्रयच्छति[13] यमभिजायते ॥७॥३।११॥

तृतीयेऽनुवाके प्रथमः खण्डः ।

एतद्वै तिसृभिरावृद्भिरिमाँश्च लोकाञ्जयत्येतैश्चैनम्भूतैस्समर्धय-[1]ति[2] यान्यभिसम्भवति ॥१॥ अथ वा अतो हिङ्कारस्यैव । तं ह[3] स्वर्गे लोके सन्तम्मृत्युरन्वेत्[4] अशनया[5] ॥२॥ श्रीर्वा[6] एषा प्रजापतिस्साम्नो

४ ओव । ५-म । ६ त्रिय्- । ७-अन्ति । ८ इम्-(!) । ९-मृध्- । १० 'न्यभिसम्भवति' अधिक है लाल रंग से कटा हुआ । ११ च । १२ ऽआह । १३-आ ।

१ ओक्- । २-मृध्- । ३ मास्ति । ४ सितम् । ५ अनेति । ६ श्री ।

यद्धिङ्कारः । तमि[7]दुद्गाता श्रिया प्रजापतिना हिङ्कारेण मृत्युमपसेधति ॥३॥ हुम्भेत्याह माऽत्र नु[8] गा यत्रैतद्यजमान इति हैतत् ॥४॥ स यथा श्रेयसा सिद्धः पापीयान् प्रतिविजते[9] एवं[10] हैवाऽस्मान्मृत्युः पाप्मा प्रतिविजते ॥५॥ यन्भेत्याह चन्द्रमा वै मा मासः । एष ह वै मा मासः । तस्मान्मेत्याह । भा[11] इति हैतत्परोक्षेणेव । यस्माद्धेव मेत्याह यद्धेव[12] मेत्याहैतानि त्रीणि । तस्मान्मेति ब्रूयात् ॥६॥३।१२॥

तृतीयेऽनुवाके द्वितीयः खण्डः ।

हुम्भा इति ब्रह्मवर्चसकामस्य । भातीव हि ब्रह्मवर्चसम् ॥१॥ हुम्बो[1] इति पशुकामस्य । बो इति ह पशवो वाश्यन्ते ॥२॥ हुम् वगिति श्रीकामस्य[2] । वगिति ह श्रियम्पणायन्ति ॥३॥ हुम् भा ओवा इत्येतदेवोपगीतम् ॥४॥ महदिवाऽभिपरिवर्तयन् गायेदिति ह स्माऽऽह नाको महाग्रामो महानिवेशो भवतीति । स यथा स्थाणुमर्पयित्वे[3]तरेण[4] वेतरेण वा परियायात्[5] तादृक्तत् ॥५॥ तदु होवाच शाट्यायनिः कस्मै कामाय स्थाणुमर्पयेत । अथोपगीतमेवैतत् । नैवैतदा[6]द्रियेते[7]ति ॥६॥ [इति] नु हिङ्काराणाम्[8] । अथ वा

---

७ यद् । ८ 'इति' अधिक है । ९–विच– । १० प एवम् ।
११ भाग । १२ येव ॥

१ वो । २ श्रिक्–, –सु । ३–वा, अयित्वा । ४–रेप । ५ पर्य्या– ।
६ स्तॅद् । ७ यॉद्– । ८ हिङ्काक्– ।

मतो निधनमेव । ओवा इति द्वे अक्षरे । अन्तो वै साम्नो निधनमन्तस्स्वर्गो लोकानामन्तो ब्रध्नस्य विष्टपम् ॥७॥ तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेणान्ते स्वर्गे लोके दधाति ॥८॥ य उ ह वा अपक्षो वृक्षाग्रं गच्छत्यव वै स ततः पद्यते । अथ यद्ध पक्षी वृक्षाग्रे यदसिधारायां यत्क्षुरधारायामास्ते न वै स ततोऽवपद्यते । पक्षाभ्यां हि संयत[१] आस्ते ॥९॥ तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेण स्वरपक्षं कृत्वाऽन्ते स्वर्गे लोके दधाति । स यथा प्रत्यविभ्यदासीतैवमेव स्वर्गे लोकेऽविभ्यदास्तेऽथाऽऽचरति[१०] ॥१०॥ ते ह वा एते अक्षरे देवलोकश्चैव मनुष्यलोकश्च । आदित्यश्च ह वा एते अक्षरे चन्द्रमाश्च ॥११॥ आदित्य एव देवलोकश्चन्द्रमा मनुष्यलोकः । ओमित्यादित्यो[११] वागिति चन्द्रमाः ॥१२॥ तमेतदुद्गाता यजमानमोमित्येतेनाक्षरेणाऽऽदित्यं देवलोकं गमयति ॥१३॥३॥१३॥

तृतीयेऽनुवाके तृतीयः खण्डः ।

तं हाऽऽगतम्पृच्छति कस्त्वमसीति । स यो ह नाम्ना वा गोत्रेण वा प्रब्रूते तं हाऽऽह यस्तेऽयम्मय्यात्माऽभूदेष ते स इति ॥१॥

---

९ हिंसयत । १०–ओ । ११–यं ॥

१–ध्न ।

तस्मिन् हाऽऽत्मन प्रतिपद्य । तमृतवस्सम्पदार्यपद्[2]गृहीतमपकर्षन्ति । तस्य हाऽहोरात्रे लोकमाप्नुतः ॥२॥ तस्मा उ हैवेन[3] मब्रुवीत[4] कोऽहमस्मि सुवस्त्वम । स त्वां स्वर्ग्यं[5] स्वरगामिति ॥३॥ को ह वै प्रजापतिरथ हैवंविदेव सुवर्गः[6] । स हि सुवर्गच्छति ॥४॥ तं हाऽऽह यस्त्वमसि सोऽहमस्मि योऽहमस्मि स त्वमस्येहीति ॥५॥ स एतमेव सुकृतरसम्प्रविशति । यदु ह वा अस्मिँल्लोके मनुष्या यजन्ते[7] यत्साधु[8] कुर्वन्ति तदेषामूर्ध्वमन्नाद्यमुत्सीदति । तदमुं चन्द्रमसम्मनुष्यलोकम्प्रविशति ॥६॥ तस्ये[9]दम्मानुषनिकाशन[10]मण्डमुदरे[11]ऽन्वस्सम्भवति । तस्योर्ध्व[12]मन्नाद्यमुत्सीदति स्तनावभि[13] । स यदाजायतेऽथाऽस्मै माता स्तनमन्नाद्यम्प्रयच्छति ॥७॥ अजातो ह वै तावत्पुरुषो यावन्न यजते[14] स यज्ञेनैव जायते । स यथाऽण्डम्प्रथमनिर्भिण्णमेवमेव ॥८॥ तदा तं ह वा एवंविदुद्गाता यजमानमोमित्येतेनाऽक्षरेणाऽऽदित्यं देवलोकं गमयति । वागित्यस्मा उत्तरेणाऽक्षरेण चन्द्रमसम[15]न्नाद्यमक्षितिम्प्रय[16]च्छति ॥९॥ अथ यस्यैतदविद्वानुद्गायति[17] न हैवैनं देवलोकं गमयति नो

---

२ त । ३ तैन । ४-ब्रव्-, -वीत् । ५-गम् । ६ सुस्वर्-, -म । ७ जायन्ते । ८ सं- । ९-षै । १०-वँ-विक्-इस के पश्चात् 'इदम्' । ११ मदेरे । १२ मुष- । १३-माप् । १४ जायते । १५-स- । १६-यचिति । १७ ना ।

एनमन्नाद्येन समर्धयति[18] ॥१०॥ स यथाऽण्डं विदिग्धं[19] शयीताऽन्नाद्यमलभमानमेवमेव विदिग्धश्शेतेऽन्नाद्यमलभमानः[20] ॥११॥ तस्मादु हैवंविदमेवोद्गापयेत । एवंविदि हैवोद्गातरिति ब्रूतः प्रतिशृणुयात्[21] ॥१२॥३।१४॥

तृतीयेऽनुवाके चतुर्थः खण्डः । तृतीयोऽनुवाकस्समाप्तः ।

---

वागिति हेन्द्रो[1] विश्वामित्रायोक्थमुवाच[2] । तदेतद्विश्वामित्रा उपासते वाचमेव ॥१॥ मनुर्ह वसिष्ठाय ब्रह्मत्वमुवाच । तस्मादाहुर्वासिष्ठमेव ब्रह्मेति ॥२॥ तदु वा आहुरेवंविदेव ब्रह्मा । क उ एवंविदं वासिष्ठमर्हतीति ॥३॥ प्रजापतिः प्राजिजनिषत । स तपोऽतप्यत । स ऐक्षत हन्त नु प्रतिष्ठां जनयै[3] ततो याः प्रजास्स्रक्ष्ये[4] ता[5] एतदेव प्रतिष्ठास्यन्ति नाऽप्रतिष्ठाश्चरन्तीः प्रदाधिष्यन्त इति ॥४॥ स इमं लोकमजनयदन्तरिक्षलोकममुं[6] लोकमिति । तानिमाँस्त्रील्लोकाञ्जनयित्वाऽभ्यश्राम्यत[7] ॥५॥ तान् समतपत् । तेभ्यस्संतप्तेभ्यस्त्रीणि शुक्राण्युदायन्नग्निः पृथिव्या वायुरन्तरिक्षादादित्यो दिवः ॥६॥ स[8] एतानि शुक्राणि पुनरभ्येवाऽतपत्[9] । तेभ्यस्संतप्तेभ्य

---

१८–मृध्– । १९–ग्धा । २०–मा: । २१–श्रुणु–॥

१ है । २ उत्थ– । ३ जाये, जनये । ४ सृक्– । ५ ताम् । ६–मु । ७ समभवन् । ८ स्स । ९–न्न ।

त्रीण्येव शुक्राण्युदायन्नृग्वेद एवाऽग्नेर्यजुर्वेदो वायोस्सामवेद आदित्यात् ॥७॥ स एतानि शुक्राणि पुनरभ्येवाऽतपत् । तेभ्य-स्संतप्तेभ्यस्त्रीण्येव शुक्राण्युदायन्भूरित्यृग्वेदाद्भुव इति यजुर्वेदा-त्स्वरिति सामवेदात्तदेव[10] ॥८॥ तद्ध वै त्रय्यै विद्यायै शुक्रम् । एतावदिदं सर्वम् । स यो वै त्रयीं विद्यां विदुषो लोकस्सोऽस्य लोको भवति य एवं वेद ॥९॥३।१५॥

चतुर्थेऽनुवाके प्रथमः खण्डः ।

अयं वाव यज्ञो योऽयम्पवते । तस्य वाक् च मनश्च वर्तन्यौ । वाचा च ह्येष एतन्मनसा च वर्तते ॥१॥ तस्य होताऽध्वर्युरुद्गाते-त्यन्यतरां वाचा वर्तनिं संस्कुर्वन्ति । तस्मात्ते वाचा कुर्वन्ति । ब्रह्मैव मनसाऽन्यतराम्[1] । तस्मात्स तूष्णीमास्ते ॥२॥ स यद्ध सो-ऽपि स्तूयमाने वा शस्यमाने वा वावद्यमान आसीताऽन्यतरामेवा-ऽस्यापि तर्हि स वाचा वर्तनिं संस्कुर्यात् ॥३॥ स यथा पुरुष एकपाद्यन्[2] भ्रेषन्नेति रथो वैकचक्रो वर्तमान[3] एवमेव तर्हि यज्ञो भ्रेषन्नेति[4] ॥४॥ एतद्ध तद्विद्वान् ब्राह्मण उवाच ब्रह्माणम्प्रातरनु-

---

१०–म ॥

१–माम् । २ भ्र– । ३–ना । ४ ल ।

वाक उपाकृते वा यद्यमानमासीनमर्धं वा इमे तर्हि यज्ञस्याऽन्तर-गुरिति। अर्धं हि ते तर्हि यज्ञस्याऽन्तरीयुः ॥५॥ तस्माद्ब्रह्मा प्रातरनुवाक उपाकृते वाचंयम आसीताऽऽपरिधानीयाया आ वषट्कारादितरेषां स्तुतशस्त्राणामेवाऽऽसंस्थायै पवमानानाम् ॥६॥ स यथा पुरुष उभय्या पाद्यन् भ्रेषं न न्येति रथो वोभयानको-वर्तमान एवमेतर्हि यज्ञो भ्रेषं न न्येति ॥७॥३।१६॥

चतुर्थेऽनुवाके द्वितीयः खण्डः।

स यदि यज्ञ ऋक्तो भ्रेषन्नियाद्ब्रह्मणे प्रब्रूतेत्याहुः। अथ यदि यजुष्टो ब्रह्मणे प्रब्रूतेत्याहुः। अथ यदि सामतो ब्रह्मणे प्रब्रूतेत्याहुः। अथ यद्यनुपस्मृतात् कुत इदमजनीति ब्रह्मणे प्रब्रूतेत्येवाऽऽहुः ॥१॥ स ब्रह्मा प्राङ् उदेत्य स्रुवेणाऽऽग्नीध्र आज्यं जुहुयाद्भूर्भुवस्स्वरित्ये-ताभिर्व्याहृतिभिः ॥२॥ एता वै व्याहृतयस्सर्वप्रायश्चित्तयः। तद्यथा लवणेन सुवर्णं संदध्यात् सुवर्णेन रजतं रजतेन त्रपु त्रपुणा लोहायसं लोहायसेन कार्ष्णायसं कार्ष्णायसेन दारु दारु च चर्म

---

५–थो। ६ 'आसु–' द्विवार पढ़ा गया है। ७–र। ८–गु–रुर। ९ रन्तर्य्युः। १०–ॐ। ११–पाद्। १२ यद्। १३ मे॥

१ ई–। २–यो। ३ रथ। ४ प्रन्ड्, प्रा। ५ विदध–। ६–पु ७ कर्–।

च श्लेष्मणौ[८]वमेवैवं विद्वाँस्तत्सर्वं भिषज्यति ॥३॥ तदाहुर्यदहौषीन्मे ब्रह्मान्मेऽग्रहीदित्यध्वर्यवे दक्षिणानयन्त्यशंसीन्मे[२१] वषट्[९] अकर्म[१०,११] इति होत्र उदगासीन्म इत्युद्गात्रेऽथ किं चक्षुषे ब्रह्मणे तूष्णीमासीनाय समामवतीरेवेतरै[१२]र्ऋत्विग्भिर्दक्षिणा नयन्तीति ॥४॥ स ब्रूयादर्धभाग्[१३]घ[१४] वै[१५] स[१६] यज्ञस्यार्धं होष यज्ञस्य वहतीति । अर्धा ह स्म वै पुरा ब्रह्मणे दक्षिणा नयन्तीति । अर्धा इतरेभ्य ऋत्विग्भ्यः ॥५॥ तस्यैष श्लोको—

मयीदम्मन्ये भुवनादि सर्वम्, मयि लोका मयि दिशश्चतस्रः ।
मयीद[१७]म्मन्ये निमिषद्यदेजति, मय्याप ओषधयश्च सर्वा, इति ॥६॥

मयीदम्मन्ये भुवनादि सर्वमित्येवंविदं ह वावेदं सर्वम्भुवनमन्वायत्तम् ॥७॥ मयि लोका मयि दिशश्चतस्र इत्येवंविदि ह वाव लोका एवंविदि दिशश्चतस्रः ॥८॥ मयीदम्मन्ये निमिषद्यदेजति मय्याप ओषधयश्च सर्वा इत्येवंविदि[१८] ह वावेदं सर्वम्भुवनम्प्रतिष्ठितम् ॥९॥ तस्मादु हैवंविदमेव ब्रह्माणं कुर्वीत । स ह वाव[१९] ब्रह्मा य एवं वेद ॥१०॥३।१७॥

चतुर्थेऽनुवाके तृतीयः खण्डः ।

---

८ श्लेष्म (संदध्यात्) या कोष्ठ लाल रंग में कटा हुआ । ९–वषट् । १० अकरणं । ११ मय् । २० 'पव' नास्ति । २१ आशांसीत् । १२–रेर् । १३–भाग् । १४ नास्ति । १५ वै । १६ च । १७ मति ही । १८–दे । १९ मय ।

अथ वा अतस्तोमभागानामेवाऽनुमन्त्राः ॥१॥ तद्धैतदेके स्तोमभागैरेवाऽनुमन्त्रयन्ते[1] । तत्तथा न[2] कुर्यात्[3] ॥२॥ देवेन सवित्रा प्रसूतः प्रस्तोतर्देवेभ्यो वाचमिष्येत्यु हैकेऽनुमन्त्रयन्ते सविता वै देवानाम्प्रसविता सवित्रा[4] प्रसूता इदमनु मन्त्रयामह इति वदन्तः । तदु तथा न[5] कुर्यात् ॥३॥ भूर्भुवस्स्वरित्यु हैकेऽनुमन्त्रयन्त एषा वै त्रयीविद्या[6] त्रय्यै[7] वेदं[8] विद्यया[9]ऽनुमन्त्रयामह इति वदन्तः । तदु तथा नो एव कुर्यात् ॥४॥ ओमित्येवानुमन्त्रयेत ॥५॥ अथैष वसिष्ठस्यैकस्तोमभागानुमन्त्रः । तेन हैतेन वसिष्ठः प्रजातिकामो-ऽनुमन्त्रयां चक्रे देवेन सवित्रा प्रसूतः प्रस्तोतर्देवेभ्यो[17] वाचमिष्य भूर्भुवस्स्वरोमिति । ततो वै स बहुः[10] प्रजया पशुभिः प्राजायत[12] ॥६॥ स एव तेन वसिष्ठस्यैकस्तोम[13] भागानुमन्त्रेणाऽनुमन्त्रयेत[14] बहुरेव प्रजया[11] पशुभिः प्रजायते । इयं[15] त्वेवस्थितिरोमित्येवाऽनुमन्त्रयेत ॥७॥३।१८॥

चतुर्थेऽनुवाके चतुर्थः[16] खण्डः ।

---

१ स्तोमा– । २ नु । ३ कुर्वाद् । ४ ऍ । ५ ने ' ए ' खाल में कटा, ए । ६–ई । ७ त्रैय्ये । ८ ऽव । ९–याया । १०–हु । ११–जाया । १२ प्राज्– । १३ तत्स्तोम्– । १४–येते । १५ इय । १६ पञ्चमः । १७–स्ता ॥

अथैष वाचा वज्रमुद्गृह्णाति । य[1]दाह सोमः पवत इति वोपावर्त-ध्वमिति वा यांचैव तद्वाचो वज्रं विगृह्णते वाचस्सत्येनातिमुच्यते । तस्मादोमित्येवाऽनुमन्त्रयेत ॥१॥ देवा वा अनया[2] त्रय्या [ विद्यया ] सरसयोर्ध्वास्स्वर्गं लोकमुदक्रामन् । ते मनुष्या-णामन्वागमाद्बिभ्यं[3]तस्त्रयं वेदमपीलयन् ॥२॥ तस्य पीलयन्त एकमेवाक्षरं नाऽशक्नुवन्पीलयितुमोमिति यदेतत् ॥३॥ एष उ ह वाव सरसः । सरसा ह वा एवंविदस्त्रयी विद्या भवति ॥४॥ स यां ह वै त्र[4]य्या विद्यया सरसया जितिं जयति यामृद्धिमृध्नोति जयति तां जितिमृध्नोति तामृद्धिं य एवं वेद ॥५॥ एतद्ध वा अक्षरं त्रय्यै विद्यायै प्रतिष्ठा[5] । ओमिति वै होता प्रतिष्ठित ओमित्य-ध्वर्युरोमित्युद्गाता ॥६॥ एतद्ध वा अक्षरं वेदानां त्रिविष्टपम् । एतस्मिन्वा अक्षर[6] ऋत्विजो यजमानमाधाय स्वर्गे लोके समुद्वहन्ति तस्मादोमित्येवानुमन्त्रयेत ॥७।३।१६॥

चतुर्थेऽनुवाके पञ्चमः खण्डः । चतुर्थोऽनुवाकस्समाप्तः ।

—————:०:—————

गुहासि देवो[1]ऽस्युपवा[2]स्युप तं वाय[3]स्व योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥१॥ माहि[4]नासि बहुलासि बृहत्यासि रोहिण्यस्यपभाऽसि ॥२॥

१ य । २–र्थे । ३ विम्– । ४ त्रैय्– । ५ प्रतिष्ठे । ६–ए ।
१ देवास्मि । २ प्य् । ३ येयस्वि । ४ महिका ।

सम्भूर्देवोऽसि समहम्भूयासम् । आभूतिरस्या[5]भूयासम् । भूतिरासि भूयासम् ॥३॥ यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि । उप ते ता दिशामि ॥४॥ नाम मे शरीरम्मे प्रतिष्ठा मे । तन्मे त्वयि तन्मे मोऽपह्वथा इतीमाम्पृथिवीमवोचत् ॥५॥ तमियमागतम्पृथिवी प्रतिनन्दत्ययं ते भगवो लोकः । स ह[6] नावयं लोक इति ॥६॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥७॥ किं नु ते मयी[7]ति । नाम[8] मे शरीरम्मे प्रतिष्ठा मे । तन्मे त्वयि तन्मे पुनर्देहीति । तदस्मा[14] इयम्पृथिवी पुनर्ददाति ॥८॥ तामाह प्र मा वहेति । किमभीति । अग्निमिति तमग्निमभिप्रवहति[9] ॥९॥ सोऽग्निमाहा-ऽभिजिदस्या[10]भिजय्यासम्[11] । लोकाजिदसि लोकं जय्यासम् । अन्नपतिरस्यन्नमद्यासम । अन्नादो भवति यस्त्वैवं वेद ॥१०॥ सम्भूर्देवोऽसि समहम्भूयासम् । आभूतिरस्याभूयासम् । भूतिरासि भूयासम् ॥११॥ यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि । उप ते ता दिशामि ॥१२॥ तपो मे तेजो मेऽन्नम्मे वाङ् मे । तन्मे त्वयि । तन्मे मोऽपह्वथा[12] इत्यग्निमवोचत् ॥१३॥ तं तथैवाऽऽगत-

---

५ आभूरितिर् । ६ स । ७ मयी । ८ म । ९–ह्वति । १० 'अभिजिदस्य' दो बार आया है । ११ जय्यं– । १२–थाव । १३ तस्मा । १४ अस्माव ॥

माग्निः प्रतिनन्दत्ययं ते भगवो लोकस्सइ नावयं लोक इति ॥१४॥ यद्वाव मे त्वयीत्याहु तद्वाव मे पुनर्देहीति ॥१५॥ किं नु ते मयीति । तपो मे तेजो मेऽन्नम्मे वाङ् मे । तन्मे त्वयि । तन्मे पुनर्देहीति । [तद्] अस्मा[1,2] अग्निर्पुनर्ददाति ॥१६॥ तमाह प्र मा वहेति ॥१७।३।२०॥

पञ्चमेऽनुवाके प्रथमः खण्डः ।

किमभीति । वायुमिति । तं वायुमभिप्रवहति ॥१॥ स वायुमाह यत्पुरस्ताद्वासीन्द्रो राजा भूतो वासि । यद्दक्षिणतो वासीशानो भूतो वासि । यत्पश्चाद्वासि वरुणो राजा भूतो वासि । यदुत्तरतो वासि सोमो राजा भूतो वासि । यदुपरिष्टादववासि प्रजापतिर्भूतोऽववासि[1] ॥२॥ प्राणो[2]ऽस्येकप्राणोऽनवसृष्टो[3] देवानामिवलमप्यथा[4] ॥३॥ तव प्रजास्तवौषधयस्तवाऽऽपो विचलितमनुविचलन्ति ॥४॥ सम्भूर्देवो[5]ऽसि समहम्भूयासम् । आभूतिरस्याभूयासम् । भूतिरसि भूयासम् ॥५॥ यास्ते प्रजा उपदिष्टानाऽहं तव ताः पर्येमि । उप ते ता दिशामि ॥६॥ प्राणापाणौ[6] मे श्रुतम्मे । तन्मे त्वयि । तन्मे मोऽपहृथा इति वायुमवोचत् ॥७॥ तं तथैवागतं वायुः प्रतिनन्दत्ययं ते भगवो लोकः । स ह नावयं लोक इति ॥८॥ यद्वाव मे त्वयी[7]-

१ऽप-। २ प्र-। ३-स्त्रष्टो। ४(अ)पधिः। ५ सँभूर्द। ६ प्राणापानौ। ७ त्वयी॥

साह तद्वाव मे पुनर्देहीति ॥९॥ किं नु ते मयीति । प्राणापानौ मे श्रुतम्मे । तन्मे त्वयि । तन्मे पुनर्देहीति । तदस्मै वायुः पुनर्ददाति ॥१०॥ तमाह प्र मा वहेति । किमभीति । अन्तरिक्षलोकमिति । तमन्तरिक्षलोकमभिप्रवहति ॥११॥ तं तथैवाऽऽगतमन्तरिक्षलोकः प्रति नन्दत्ययं ते भगवो लोकः । स ह नावयं लोक इति ॥१२॥ यद्वाव मे त्वयीत्साह तद्वाव मे पुनर्देहीति ॥१३॥ किं नु ते मयीति । अयम्म आकाशः स मे त्वयि । तन्मे पुनर्देहीति । तमस्मा आकाशमन्तरिक्ष लोकः पुनर्ददाति ॥१४॥ तमाह प्र मा वहेति ॥१५॥३।२१॥

पञ्चमेऽनुवाके द्वितीयः खण्डः ।

किमभीति । दिश इति । तं[1] दिशोऽभिप्रवहति ॥१॥ तं तथैवागतं दिशः प्रतिनन्दन्त्ययं[2] ते भगवो लोकः । स ह नोऽयं लोक इति ॥२॥ यद्वाव मे युष्मास्वित्साह तद्वाव मे पुनर्दत्तेति ॥३॥ किं नु तेऽस्मास्विति । श्रोत्रमिति । तदस्मै श्रोत्रं दिशः पुनर्ददति ॥४॥ ता आह प्र मा वहतेति । किमभीति । अहोरात्रयोर्लोकमिति । तमहोरात्रयोर्लोकमभिप्रवहन्ति ॥५॥ तं तथैवागतमहोरात्रे प्रतिनन्दतोऽयं ते भगवो लोकः । स ह नोऽयं लोक इति ॥६॥ यद्वाव

१–ह । २–न्दति ।

मे युवयोरित्याह तद्वाव मे पुनर्दत्तमिति ॥७॥ किं नु त आवयोरिति। अचितिरिति। तामस्मा अचितिमहोरात्रे पुनर्दत्तः ॥८॥ ते आह प्र मा वहतमिति ॥९॥३।२२॥

पञ्चमेऽनुवाके तृतीयः खण्डः।

किमभीति। अर्धमासानिति। तमर्धमासानभिप्रवहतः ॥१॥ तं तथैवागतमर्धमासाः प्रतिनन्दन्त्ययं[2] ते भगवो लोकः। स ह नोऽयं लोक इति ॥२॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्ते-ति ॥३॥ किं नु तेऽस्मास्विति। इमानि क्षुद्राणि पर्वाणि। तानि मे युष्मासु। तानि मे प्रति संधत्तेति। तान्यस्यार्धमासाः पुनः प्रति संदधाति[3] ॥४॥ तानाह प्र मा वहतेति। किमभीति। मासा-निति। तम्मासानभिप्रवहन्ति ॥५॥ तं तथैवागतम्मासाः प्रतिनन्दन्त्ययं[2] ते भगवो लोकः। स ह नोऽयं लोक इति ॥६॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥७॥ किं नु तेऽस्मा-स्विति। इमानि स्थूलानि पर्वाणि। तानि मे युष्मासु। तानि मे प्रति संधत्तेति। तान्यस्य मासाः पुनः प्रति संदधाति ॥८॥ तानाह प्र मा वहतेति ॥९॥३।२३॥

पञ्चमेऽनुवाके चतुर्थः खण्डः।

---

१ नास्ति। २—न्दति। ३—धाति, लाल रंग से शोधा हुआ है॥

किमभीति । ऋतूनिति । तमृतूनभिप्रवहन्ति ॥१॥ तं तथैवाऽऽगतमृतवः प्रतिनन्दन्त्ययं ते भगवो लोकः । स ह नोऽयं लोक इति ॥२॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥३॥ किं नु तेऽस्मास्विति । इमानि ज्यायांसि पर्वाणि । तानि मे युष्मासु तानि मे प्रतिसंधत्तेति । तान्यस्यर्तवः पुनः प्रतिसंदधति ॥४॥ तानाह प्र मा वहतेति । किमभीति । संवत्सरमिति । तं संवत्सरमभिप्रवहन्ति ॥५॥ तं तथैवाऽऽगतं संवत्सरः प्रतिनन्दत्ययं ते भगवो लोकः । स ह नावयं लोक इति ॥६॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥७॥ किं नु ते मयीति । अयम्म आत्मा । स मे त्वयि तन्मे पुनर्देहीति । तमस्मा आत्मानं संवत्सरः पुनर्ददाति ॥८॥ तमाह प्र मा वहेति ॥९॥१२४॥

पञ्चमेऽनुवाके पञ्चमः खण्डः ।

किमभीति । दिव्यान् गन्धर्वानिति तं दिव्यान् गन्धर्वानभिप्रवहति ॥१॥ तं तथैवाऽऽगतं दिव्या गन्धर्वाः प्रतिनन्दन्त्ययं ते भगवो लोकः । स ह नोऽयं लोक इति ॥२॥ यद्वाव मे युष्मास्वित्याह तद्वाव मे पुनर्दत्तेति ॥३॥ किं नु तेऽस्मास्विति ।

---

१ ते । २ त्वयी । ३ वहते ॥
१ त ।

गन्धो[2] मे मोदो मे प्रमोदो मे । तन्मे युष्मासु । तन्मे पुनर्दत्तेति तदस्मै दिव्या गन्धर्वाः पुनर्ददति ॥४॥ तानाह प्र मा वहतेति । किमभीति । अप्सरस इति । तमप्सरसोऽभिप्रवहन्ति ॥५॥ तं तथैवाऽऽगतमप्सरसः प्रतिनन्दन्त्ययं ते भगवो लोकः । स ह नोऽयं लोक इति ॥६॥ यद्वाव मे युष्मास्वित्याह[3] तद्वाव मे पुनर्दत्तेति ॥७॥ किं नु तेऽस्मास्विति । हसो मे क्रीळा मे मिथुनम्मे । तन्मे युष्मासु । तन्मे पुनर्दत्तेति । तदस्मा अप्सरसः पुनर्ददति ॥८॥ ता आह प्र मा वहतेति ॥९॥१२५॥

पञ्चमेऽनुवाके षष्ठः खण्डः ।

किमभीति । दिवमिति । तं दिवमभिप्रवहन्ति ॥१॥ तं तथैवाऽऽगतं द्यौः प्रतिनन्दत्ययं ते भगवो लोकः । स ह नावयं लोक इति ॥२॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति ॥३॥ किं नु ते मयीति । तृप्तिरिति । सकृत्तृप्तेव ह्येषा । तामस्मै तृप्तिं द्यौः पुनर्ददाति ॥४॥ तमाह प्र मा वहेति । किमभीति । देवानिति । तं देवानभिप्रवहति ॥५॥ तं तथैवाऽऽगतं देवाः प्रतिनन्दन्त्ययं ते भगवो लोकः । स ह नोऽयं लोक इति ॥६॥ यद्वाव मे युष्मास्वि-

---

२ गन्धर्वो । ३ युयद् ॥

त्वाह तद्वाव मे पुनर्देहीति ॥७॥ किं नु तेऽस्मास्विति । अमृतमिति ।
तदस्मा अमृतं देवाः पुनर्ददाति[२] ॥८॥ तानाह प्र मा वहतेति॥६॥३।२६॥

पञ्चमेऽनुवाके सप्तमः खण्डः ।

किमभीति । आदित्यमिति । तमादित्यमभिप्रवहन्ति ॥१॥ स
आदित्यमाह विभूः पुरस्तात्सम्पत्[१] पश्चात् । सम्यङ्[२] त्वमसि ।
समीचो मनुष्यानरोषी[३] रुपतस्त ऋषिः पाप्मानं हन्ति । अपहत-
पाप्मा भवति यस्त्वै[४]वं[५] वेद ॥२॥ सम्भुर्दे[६]वोऽसि समहम्भूयासम् ।
आभूतिरस्याभूयासम् । भूतिर[७]सि भूयासम् ॥३॥ यास्ते प्रजा
उपदिष्टा नाहं तव ताः पर्योमि । उप ते ता दिशामि ॥४॥ ओजो
मे बलम्मे चक्षुर्मे । तन्मे त्वयि तन्मे मोऽपहृथा इत्यादित्यमवोचत्॥५॥
सं तथैवाऽऽगत[८]मादित्यः प्रतिनन्दत्ययं ते भगवो लोकः । स इ
नावयं लोक इति ॥६॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देही-
ति ॥७॥ किं नु ते मयीति । ओजो मे[९] बलम्मे चक्षुर्मे । तन्मे
त्वयि[१०] । तन्मे पुनर्देहीति । तदस्मा आदित्यः पुनर्ददाति ॥८॥
तमाह प्र मा वहेति । किमभीति । चन्द्रमसमिति[११] । तं चन्द्रमसमभि-

---

२–द्दाति ॥

१–वत् । २ सम्यँदे । ३ अरोतिषि 'ति' खाक से कटा हुआ है, ।
। ४ त्व् । ५ एवम् । ६–भूतिर् । ७ भूतिर् । ८ ऽऽगतां । ९ मास्ति ।
१० त्वीयी, त्वी यीति । ११ चँन्द्र–।

प्रवहति ॥९॥ स चन्द्रमसमाह सत्यस्य[12] पन्था न त्वा[13] जहाति। अमृतस्य[14] पन्था न त्वा जहाति ॥१०॥ नवो नवो भवसि जायमानो भरो नाम ब्राह्मण उपास्से। तस्मात्ते सत्रा उभये देवमनुष्या अन्नाद्यम्भरन्ति। अन्नादो भवति यस्त्वैवं[4][5] वेद ॥११॥ सम्भूर्देवोऽसि समहम्भूयासम्। आभूतिस्त्वाभूयासम्। भूतिरसि भूयासम् ॥१२॥ यास्ते प्रजा उपदिष्टा नाहं तव ताः पर्येमि। उप ते ता दिशामि ॥१३॥ मनो मे रेतो मे प्रजा मे पुनस्सम्भूतिर्मे[15][16] तन्मे त्वयि तन्मे मोऽपहृथा इति चन्द्रमसमवोचत् ॥१४॥ तं तथैवाऽऽगतं चन्द्रमाः प्रतिनन्दत्ययं ते भगवो लोकः। सह नावयं लोक इति॥१५॥ यद्वाव मे त्वयीत्याह तद्वाव मे पुनर्देहीति॥१६॥ किं नु ते मयीति। मनो[17] मे रतो मे प्रजा मे पुनस्सम्भूतिर्मे[18]। तन्मे त्वयि। तन्मे पुनर्देहीति। तदस्मै चन्द्रमाः पुनर्ददाति ॥१७॥ तमाह प्र मा वहेति ॥१८॥३।२७॥

पञ्चमेऽनुवाकेऽष्टमः खण्डः।

किमभीति। ब्रह्मणो[1] लोकमिति। तमादित्यमभिप्रवहति॥१॥ स आदित्यमाह[2] प्र मा वहेति। किमभीति। ब्रह्मणो लोकमिति।

---

११ चन्द्र–। १२ वा। १३–भ्यास। १४ नास्ति, अमृतस्य पन्था ..........देवोऽसि समहम्। १५–र्ति। १६ मे, म। १७ किं नु॥

१ प्रथमो। २ आह–।

सं चन्द्रमसमभिप्रवहति[3] । स एवमेते देवते अनुसंचरति[4] ॥२॥ एषोऽन्तोऽतः परः प्रवाहो नास्ति[5] । यानु कांश्चाऽतः प्राचो लोकानभ्यवादिष्म[6] ते[7] सर्वं आप्ता भवन्ति ते जितास्तेष्वस्य सर्वेषु कामचारो भवति य एवं वेद ॥३॥ स यदि कामयेत पुनरिहाऽऽजायेयेति यस्मिन् कुलेऽभिध्यायेद्यदि ब्राह्मणकुले यदि राजकुले तस्मिन्नाजायते । स एतमेव लोकम्पुनः प्रजानन्नभ्यारोहन्नेति ॥४॥ तदु होवाच शाट्यायनिर्बहुव्याहितो वा अयम्बहुशो लोकः । एतस्य वै कामाय[8] नु[9] ब्रुवते [वा] श्राम्यन्ति[10] वा क एतत्प्राप्य पुनरिहेयादत्रैव स्यादिति ॥५॥१२८॥

पञ्चमेऽनुवाके नवमः खण्डः । पञ्चमोऽनुवाकस्समाप्तः ।

———— :०: ————

उच्चैःश्रवा[1] ह कौपयेयः[2] कौरव्यो राजाऽऽस । तस्य ह केशी[3] दार्भ्यः पाञ्चालो राजा स्वस्रीय[4] आस । तौ[5] हाऽन्योन्यस्य प्रियावासतुः ॥१॥ स होच्चैःश्रवा[1]: कौपयेयो[2]ऽस्माल्लोकात् प्रेयाय । तस्मिन् ह प्रेते केशी[3] दार्भ्योऽरण्ये मृगयां चचाराऽप्रेगं विनिनी-

---

३—अन्ति, । ४ 'एषोऽयमभिप्रवहति । ५ मा वहेऽति । किमभीऽति । ब्रह्मणो लोकमिति.........देवते अनु संचरति' अधिक है । ५ ऽस्मि । ६—दिष्ठ । ७ तेषु । ८ 'वा' अधिक है । ९ ब्रूवते । १० 'चा' अधिक है ।

१—पेश्र्—। २ कौव—। ३ केश्शी, केश्या । ४ स्वस्री—। ५ 'गा' लाल रङ्ग में फटा हुआ अधिक है ।

षमाणः ॥२॥ स ह तथैव पल्ययमानो मृगान् प्रसरन्नन्तरेणौ-
वोच्चैश्रवसं कौपेयमभिजगाम ॥३॥ तं होवाच दृप्यामि स्वी३-
ज्जानामीति । न दृप्यसीति होवाच जानासि । स एवास्मि यम्मा
मन्यस इति ॥४॥ अथ यद्भगव आहुरिति होवाच य आविर्भव-
त्यन्येऽस्य लोकमुपयन्तीत्यथ कथमशको म आविर्भवितुमिति॥५॥
ओमिति होवाच यदा वै तस्य लोकस्य गोप्तारमविदेऽतस्त आवि-
रभूवमाप्रियं चास्य विनेष्याम्यनु चैनं शासिष्यामीति ॥६॥ तथा
भगव इति होवाच । तं वै नुत्वा परिष्वजा इति । तं ह स्म
परिष्वजमानो यथा धूमं वापीयाद्वायुं वाकाशं वाग्न्यर्चिं वाऽपोवैवं
ह स्मैनं व्येति । न ह स्मैनम्परिष्वङ्गायोपलभते ॥७॥३।२८॥

षष्ठेऽनुवाके प्रथमः खण्डः ।

स होवाच यद्वै ते पुरा रूपमासीत्तत्ते रूपम् । न तु त्वा परि-
ष्वङ्गायोपलभ इति ॥१॥ ओमिति होवाच ब्राह्मणो वै मे साम
विद्वान् साम्नोद्गायत् । स मेऽशरीरेण साम्ना शरीराण्यधूनोत् ।
तद्यस्य वै किल साम विद्वान् साम्नोद्गायति देवतानामेव सलोकतां
गमयतीति ॥२॥ पतङ्गः प्राजापत्य इति होवाच प्रजापतेः प्रियः

---

६ प्रसरन्–। ७ ऽच्चैश्र–,ऽच्चैश्र–। ८ य । ९ प्रत । १० पा । ११ हे । १२ वॅ ॥

१ ऽत्र । २ ने । ३–ङ्गाये। ४ ऽप लभते । ५–राएयधू ।

पुत्र [6]आस । स तस्मा एतत् सामाब्रवीत् । तेन स ऋषीणामुद्-गायत् । त [7]एत ऋषयो धूतशरीरा इति ॥३॥ एतेनो एव साम्नेति होवाच प्रजापतिर्देवानामुदगायत् । त एत उपरि देवा धूतशरीरा इति ।४॥ तस्मिन् हैनमनुशशास । तं हानुशिष्यो-वाच यस्[8]मैवैतत् साम विद्यात् स स्मैव त उद्गायत्विति ॥५॥ स [9]हानुशिष्ट आजगाम । स ह स्म कुरुपञ्चालाना[10]म्ब्राह्मणानुपपृ-च्छमानश्चरति ॥६॥३।३०॥

षष्ठेऽनुवाके द्वितीयः खण्डः ।

व्यूढच्छन्दसा वै द्वादशाहेन यक्ष्यमाणो[1]ऽस्मि । स यो[2] [3]वस्तत्साम वे[4]द यदहं वेद स एव म उद्गास्यति । मीमांसध्वमिति ॥१॥ तस्मै ह मीमांसमानानामेकश्चन [ न ] सम्प्रत्यभिदधाति ॥२॥ स ह तथैव पल्ययमानश्[5]श्मशा[6]ने वा [7]वने [8]बाऽऽस्तेतशिया-नमुपाधावयांचकार । तं ह चाय्यमानः प्रजहौ ॥३॥ तं हो-वाच कोऽसीति । ब्राह्मणोऽस्मि मातृदो माञ्ज इति ॥४॥ स किं वेत्थेति । सामेति ॥५॥ ओमिति होवाच । व्यूढच्छन्दसा वै द्वादशाहेन यक्ष्यमाणो[10]ऽस्मि । स यदि तत्साम वेत्थ यदहं वेद[11] त्व-

६ भ्रा । ७ तं । ८ वे । ९–ष्टा । १०–पाञ्चे–ः।

१–त्सम–। २ यदि । ३ त्वम् । ४ वेत्थ । ५ श्मश्रूनाम् । ६ वाव;साध ।७न् । ८ वब,उप । ९ च्छायाम, जायान । १०–त्सम–। ११ 'यदहं वेत्थ' अधिक है ।

मेव मु उद्गास्य[12]सि । मीमांसस्वेति ॥६॥ तस्मै ह मीमांसमानस्त-
दे[13]व सम्प्रत्यभिदधौ ॥७॥ तं होवाचाऽयमेव उद्गास्यतीति[14] ॥८॥
तस्मै ह कुरुपञ्चालाना[15]म्ब्राह्मणा असूयन्त[16] आहुरेषु ह वा अयं
कुल्येषु[17] सत्समुद्गास्य[18]ति । कस्मा अयमलमिति[19] ॥ ६ ॥ अलम् न्वै[20]
महामिति हस्माऽह । सैवाऽलम्मस्याऽलम् मतायैद्वतस्य हाऽल-
मे[21]वो[22]ज्जगौ । तस्मादालम्यैलाजोद्गातेत्याख्यापयन्ति ॥१०॥३॥२॥

षष्ठेऽनुवाके तृतीयः खण्डः ।

तद्ध सात्यकीर्ता आहुर्या वयं देवतामुपास्महएकमेव वयं तस्यै
देवतायै रूपं गव्यादिशाम एकं वाहन एकं हस्तिन्येकम्पुरुष एकं
सर्वेषु भूतेषु । तस्या एवेदं देवतायै सर्वं रूपमिति ॥१॥ तदेतदेकमेव
रूपम्प्राण एव । यावद्ध्येव प्राणेन प्राणिति तावद्रूपम्भवति[1] तद्रू-
पम्भवति ॥२॥ तदथ यदा प्राण उत्क्रामति दा[2]र्वे[3]वेव भूतोऽनर्थ्यः[4]
परिशिष्यते न किंचन रूपम् ॥३॥ तस्यान्तरात्मा तपः । तस्मा-
त्तप्यमानस्योष्णतरः प्राणो भवति ॥४॥ तपसोऽन्तरात्माग्निः ।
स निरुक्तः । तस्मात्स दहति[5] ॥५॥ अथाधिदैवतम्[6] । इयमेवैषा

१२–ति सँ ठीक किया हुआ । १३ 'च' अधिक है । १४ नास्ति 'इति' ।
१५–पाञ्च– । १६ आसू– । १७ कुलेषु । १८ आस– । १९ अर्याम । २० न्वै
इसके आगे 'म' लाल रंग में कटा हुआ है । २१ 'म' अधिक है । २२ एवौ ॥
१ मद्रू । २ एवो । ३–प । ४–थः । ५ दति । ६–दैव– । ७–प्र–

देवता योऽयम्पवते । तस्मिन्नेतस्मिन्नापोऽन्तः । तदन्नम् । सो-ऽरूत्त उपासितव्यः । यदस्मिन्नापोऽन्तस्तेनाऽरूत्तः ॥६॥ तस्या-न्तरात्मा तपस् । तस्मादेष आतपत्युष्णातरः पवते ॥७॥ तपसो-ऽन्तरात्मा विद्युत् । स निरुक्तः । तस्मात्सोऽपि दहति ॥८॥ तानि वा एतानि चत्वारि साम प्राणो वाङ्मनस्स्वरः । स एष प्राणो वाचा करोति मनो नेत्रः । तस्य स्वर एव प्रजाः । प्रजावान् भवति य एवं वेद ॥९॥३।३२॥

षष्ठेऽनुवाके चतुर्थः खण्डः ।

स यो वायुः प्राण एव सः । योऽग्निर्वागेव सा । यश्चन्द्रमा मन एव तद् । य[1] आदित्यस्स्वर एव सः । तस्मादेतमादित्यमाहु-स्स्वर एतीति ॥१॥ स यो ह वा अमूर्देवता उपास्ते या अमूरधि-देवतं[2] दूरूपा वा एता दुरनुसम्प्राप्या[3] इव । कस्तद्वेद यद्येता अनु वा सम्प्राप्नुयान्न वा ॥२॥ अथ य एना अध्यात्ममुपास्ते स हा-ऽन्तिदेवो भवति । निर्जीर्यन्तीव[4] वा इत एता । [व] अस्य वा एतास्शरीरस्य सह प्राणेन निर्जीर्यन्ति । क उ एव तद्वेद यद्येता अनु वा सम्प्राप्नुयान्न वा[5] ॥३॥ अथ य एना उभयीरेकधा[6] भव-

'तानि वासितव्यो (!) यदस्मिन्नापोऽन्तम्—तस्मात्सोऽपि दहति' दोबारा आया है ॥

१ यदा । २—रूर्वे । ३—प्यापा । ४ या । ५ वें । ६ उमेधीर ।

न्नीर्वेद स एवानुष्टुभ्या साम वेद स आत्मानं वेद स ब्रह्मवेद ॥४॥

तदाहुः प्रादेशमात्राद्वा इत एता एकम्भवन्ति । अतो ह्ययम्प्राणा-
स्स्वर्य[7] उपर्युपरि[8] वर्तन[9] इति ॥५॥ अथ हैक आहुश्चतुरंगुलाद्वा[10] इत
एता एकम्भवन्तीति । अतो ह्येवायम्प्राणस्स्वर्य[7] उपर्युपरि[8][9]
वर्तत इति ॥६॥ स एष ब्राह्मण[11] आवर्तः । स य एवमेतम्ब्रह्मण[11]
आवर्तं वेदाऽभ्येनम्प्रजाः पशव आवर्तन्ते सर्वमायुरेति ॥७॥ स
यो हैवं विद्वान्प्राणेन प्राणयाऽपानेनाऽपान्य मनसैता उभयोर्दे-
वता आत्मन्येत्य मुख आधत्ते तस्य सर्वमाप्तम्भवति सर्वं जितम्।
न हास्य कश्चन कामोऽनाप्तो भवति य एवं वेद ॥८॥२।२३॥

षष्ठेऽनुवाके पञ्चमः खण्डः ।

तदेतन्मिथुनं यद्वाक्च प्राणश्च । मिथुनमृक्सामे । आचतुरं
वाव[1] मिथुनम्प्रजननम् ॥१॥ तद्यत्राऽद आह सोमः पवत इति
वोपावर्तध्वमिति वा तत्सहैव वाचा मनसा प्राणेन स्वरेण हिङ्-
कुर्वन्ति । तद् हिङ्कारेण[2] मिथुनं क्रियते ॥२॥ सहैव वाचा मनसा
प्राणेन स्वरेण निधनमुपयन्ति । तन्निधनेन मिथुनं क्रियते ॥३॥
तत्सप्तविधं साम्नः । सप्तकृत्व[3] उद्गाताऽऽत्मानं च यजमानं च
शरीरात्प्रजनयति ॥४॥ यादृशस्यो ह वै रेतो भवति तादृशं

---

७–स्य । ८ स्वर्यु । ९–रि (!) । १०–लं द्दू । ११ ब्रह्मन ॥
१ पाप । २–कार । ३–त्वा ।

सम्भवति यदि वै पुरुषस्य पुरुष एव यदि गोर्गौरेव यद्यश्वस्याश्व एव यदि मृगस्य मृगएव। यस्यैव रेतो भवति तदेव सम्भवति ॥५॥ तद्यथा ह वै सुवर्णं हिरण्यमग्नौ प्रास्यमानं कल्याणतरं कल्याण-तरम्भवति एवमेव कल्याणतरेण कल्याणतरेणात्मना सम्भवति य एवं वेद ॥६॥ तदेतदृचाभ्यनूच्यते ॥७॥३।३४॥

षष्ठेऽनुवाके षष्ठः खण्डः।

पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः। समुद्रे अन्तः कवयो विचक्षते मरीचीनाम्पदमिच्छन्ति वेधस इति ॥१॥ पतङ्गमक्तमिति। प्राणो वै पतङ्गः। पतन्निव ह्येष्वङ्गेष्वति रथमुदीक्षते। पतङ्ग इत्याचक्षते ॥२॥ असुरस्य माययेति। मनो वा असुरम्। तद्ध्यसुषु रमते। तस्यैष माययाक्तः ॥३॥ हृदा पश्यन्ति मनसा विपश्चित इति। हृदैव ह्येते पश्यन्ति यन्मनसा विपश्चितः ॥४॥ समुद्रे अन्तः कवयो विचक्षत इति। पुरुषो वै समुद्र एवंविद उ कवयः। त इमाम्पु-रुषेऽन्तर्वाचं विचक्षते ॥५॥ मरीचीनाम्पदमिच्छन्ति वेधस इति। मरीच्य इव वा एता देवता यदग्निर्वायुरादित्यश्चन्द्रमाः ॥६॥ न ह

---

४ ऋच्या। ५-स्या-॥

१ मक्तम। २-ता:। ३-प। ४ त। ५ हृ-। ६ एवं। ७ स।

वा एतासां देवतानाम्पदमस्ति । पदेनो ह वै पुनर्मृत्युरन्वेति ॥७॥ तदेतदनन्वितं साम पुनर्मृत्युना । अति पुनर्मृत्युं तरति य एवं वेद ॥८॥३।३५॥

षष्ठेऽनुवाके सप्तमः खण्डः ।

पतङ्गो वाचम्मनसा बिभर्ति तां गन्धर्वोऽवदद्गर्भे[1] अन्तः । तां द्योतमानां[2] स्वर्यम्मनीषामृतस्य पदे कवयो निपान्ति

इति ॥१॥ पतङ्गो वाचम्मनसा बिभर्तीति । प्राणो वै पतङ्गः । स इमां वाचम्मनसा बिभर्ति ॥२॥ तां गन्धर्वोऽवदद्[3]गर्भे अन्तरिति । प्राणो वै गन्धर्वः पुरुष उ गर्भः । स इमाम्पुरुषेऽन्तर्वा[4]चं वदति ॥३॥ तां द्योतमानां स्वर्य[5]म्मनीषामिति । स्वर्या ह्येषा मनीषा यद्वाक् ॥४॥ ऋतस्य पदे कवयो निपान्तीति । मनो वा ऋतमेवंविद उ कवयः । ओमित्येतदेवाक्षरमृतम्[6] । तेन यदृचम्मीमाँसन्ते यद्यजुर्यत्साम तदेनां निपान्ति ॥५॥३।३६॥

षष्ठेऽनुवाकेऽष्टमः खण्डः ।

---

८ वे ।

१–भो । २–मा । ३ वदति । ४ मस्र– । ५–म । ६ 'यत्साम' के आगे 'ओमित्ये–ऋतम' है ॥

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।

स स[1]ध्रीचीस्स विषूचीर्वसान आ वरीवर्त्ति भुवनेष्वन्तर् इति ॥१॥

अपश्यं गोपामनिपद्यमानमिति । प्राणो वै गोपाः । स हीदं सर्वम-निपद्यमानो गोपायति ॥२॥ आ च परा च पथिभिश्चरन्तमिति । तद्ये च ह वा इमे प्राणा अमी च रश्मय एतैर्ह वा एष एतदा च परा च पथिभिश्चराति ॥३॥ स सध्रीचीस्स विषूचीर्वसान इति । सध्रीचीश्च ह्येष एतद्विषूचीश्च प्रजा व[2]स्ते ॥४॥ आ वरीवर्त्ति भुवने-ष्वन्तरिति । एष ह्येवैषु भुवनेष्वन्तरावरीवर्त्ति ॥५॥ स एष इन्द्र उद्गीथः । स यदैष इन्द्र उद्गीथ आगच्छति नैवोद्गातुश्चोपगातॄणां[3] च विज्ञायते । इव एवोर्ध्व[4]स्स्वरुदेति । स उपरि मूर्ध्नो ललायति ॥६॥ स वि[5]द्यादागमदिन्द्रो नेह कश्चन पाप्मा न्यङ्गः परिशे[6]क्ष्यत इति । तस्मिन् ह न कश्चन पाप्मा न्यङ्गः परिशिष्यते ॥७॥ तदे[7]तद्-[8]भ्रातृव्यं साम । न ह वा इन्द्रः कंचन भ्रातृव्यम्पश्यते । स यथेन्द्रो न कंचन भ्रातृव्यम्पश्यत एवमेव [न] कंचन भ्रातृव्य-म्पश्यते य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ॥८॥३।३७॥

षष्ठेऽनुवाके नवमः खण्डः । षष्ठोऽनुवाकस्समाप्तः ॥

---

१—रीच्—इस पाद के प्रारम्भ में 'अति' पैसा अधिक है। २ सस्ते। ३—तॄणा—। ४—ध्व। ५ आगादू। ६ परिशे—। ७ तल। ८ भ्रा—॥

प्रजापतिम्ब्रह्माऽसृजत । तमपश्यमसुखमसृजत ॥१॥ तमप-
श्यमसुखं[2] शयानम्ब्रह्माऽऽविशत् । पुरुष्यं[3] तत् । प्राणो वै ब्रह्म ।
प्राणो वावैनं तदाविशत् ॥२॥ स उदतिष्ठत् प्रजानां जनयिता ।
तं रक्षांस्यन्वसचन्त[4][5] ॥३॥ तमेतदेव साम गायन्नत्रायत । यद्गायन्न[6]-
त्रायत तद्गायत्रस्य गायत्रत्वम् ॥४॥ त्रायत एनं सर्वस्मात्पाप्मनो
मुच्यते य एवं वेद ॥५॥ तमुपाऽस्मै गायता नर इत्यृचाऽऽश्रव-
णीयेनोपागायन्[7][8] ॥६॥ यदुपाऽस्मै गायता नर इति तेन गायत्रम-
भवत् । तस्माद्दैव प्रतिपत्कार्या ॥७॥ पवमानयेन्दावा अभि
देवमिया-हुम-भाताता इति षोडशाक्षराण्यभ्यगायन्त[13] । षोडशकलं[10]
वै ब्रह्म । कलाश एवैनं तद्ब्रह्माऽऽविशत् ॥८॥ तदेतच्चतुर्विंशत्यक्षरं
गायत्रम् । अष्टाक्षरः प्रस्तावः[11] । षोडशाक्षरं गीतं तच्चतुर्विंशतिस्स-
म्पद्यन्ते । चतुर्विंशत्यर्धमासस्संवत्सरः[14] । संवत्सरस्साम ॥९॥ ता[12]
ऋचश्शरीरेण मृत्युरन्वैतत् । तद्यच्छरीरवत्तन्मृत्योरासम् । अथ यद-
शरीरं तदमृतम् । तस्याऽशरीरेण साम्ना शरीराण्यधूनोत् ॥१०॥
३।३८॥

सप्तमेऽनुवाके प्रथमः खण्डः ।

---

१ मुख- । २ अप्रव- । ३-ष्यं । ४-आस्य । ५ अनुसच- । ६ गा-यत्रेत । ७ अवसीय- । ८ ऽपेना- । १०-जाम । ११ प्रास्त- । १२ तम । १३-यत । १४-सास ॥

ओवा३चोवा३चोवा३च् हुम्भा ओवा इति षोडशाक्षरा-
ण्यभ्यगायत । षोडशकलो[1] वै पुरुषः । कलाश एवास्य तच्छरी-
राण्यधूनोत् ॥१॥ स एषोऽपहतपाप्मा धूतशरीरः । तदेक्क्रिया-
क्षतियुदासंगायस्रो इत्युदास । आ इति आदित्यात् । वागिति
तद्ब्रह्म । तदिदन्तरिक्षं सोऽयं वायुः पवते । हुमिति चन्द्रमाः ।
भा इत्यादित्यः ॥२॥ एतस्य ह वा इदमक्षरस्य क्रतोर्[2]भातीत्याच-
क्षते ॥३॥ एतस्य ह वा इदमक्षरस्य क्रतोर[3]भ्रमित्याचक्षते ॥४॥
एतस्य ह वा इदमक्षरस्य[4] क्रतोः[2] कुभ्रमित्याचक्षते ॥५॥ एतस्य
ह वा इदमक्षरस्य क्रतोश्[2]शुभ्रमित्याचक्षते ॥६॥ एतस्य ह वा
इदमक्षरस्य क्रतोर्[3]वृ[5]षभ इत्याचक्षते ॥७॥ एतस्य ह वा इदमक्षरस्य
क्रतोर्[2]दर्भ[6] इत्याचक्षते ॥८॥ एतस्य ह वा इदमक्षरस्य क्रतोर्[2]यो
भा[7]तीत्याचक्षते ॥९॥ एतस्य ह वा इदमक्षरस्य क्रतोस्[2]सम्भवती-
त्याचक्षते ॥१०॥ तद्यत्किं च भा३ इति च भा[8]३ इति च तदेत-
न्मिथुनं गायत्रम् । प्र मिथुनेन जायते य एवं वेद ॥११॥
३।३९॥

सप्तमेऽनुवाके द्वितीयः खण्डः ।

---

१–भा । २ क्रत्–। ३ सर्वत्र ऐसा पाठ । ४–स्य । ५ वृषभ–।
६ दृभ, सम्भवती । ७ य भंती । ८ भ् ॥

तदेतदमृतं गायत्रम् । एतेन वै प्रजापतिरमृतत्वमगच्छदेतेन देवा एतेनर्षयः ॥१॥ तदेतद्ब्रह्म प्रजापतयेऽब्रवीत् प्रजापतिः[1] परमेष्ठिने प्राजापत्याय परमेष्ठी प्राजापत्यो देवाय सवित्रे देवस्सविता-ऽग्नयेऽग्निरिन्द्रायेन्द्रः काश्यपाय काश्यप ऋश्यशृङ्गाय काश्यपाय ऋश्यशृङ्गःकाश्यपो देवतरसे श्यावसायनाय[2] काश्यपाय देवतराश्श्या-वसायनः काश्यपश्शुषाय वाह्नेयाय काश्यपाय शुषो[3] वाह्नेयः[4] का-श्यप इन्द्रोताय[5] दैवापाय शौनकायेन्द्रोतो दैवापश्[6]शौनको दृतय ऐन्द्रोतये शौनकाय दृतिरैन्द्रोतिश्शौनकः पुलुषाय प्राचीनयोग्याय पुलुषः प्राचीनयोग्यस्सत्ययज्ञाय पौलुषये प्राचीनयोग्याय सत्य-यज्ञः पौलुषिः प्राचीनयोग्यस्सोमशुष्माय सात्ययज्ञाय प्राचीन-योग्याय सोमशुष्मस्सात्ययज्ञिः प्राचीनयोग्यो हृत्स्वाशयायाऽऽल्ल-केयाय[7] माहावृषाय राज्ञे हृत्स्वाशय आल्लकेयो माहावृषो राजा जनश्रुताय[8] काण्ड्वियाय जनश्रुतः काण्ड्वियस्सायकाय जानश्रुते-याय काण्ड्वियाय सायको जानश्रुतेयः काण्ड्वियो नगरिणे जानश्रुतेयाय काण्ड्वियाय नगरी जानश्रुतेयः काण्ड्वियश्शङ्खाय[10]

१ 'काश्यपो' अधिक है। २ श्यावसाय। ३ शूषो, शूषो। ४, वाह्ने। ५ इन्द्रात-। ६-पिश। ७ ल्लोक-। ८ स सात्ययज्ञिः प्राचीनयोग्यो हृत्स्वा' अधिक है। ९ जानुश्र-, जानश्र-। १० शिग्र-।

शाट्यायनये[11] आत्रेयाय शङ्खश्शाट्यायनिरात्रेयो रामाय क्रातुजातेयाय वैयाघ्रपद्याय रामः क्रातुजातेयो वैयाघ्रपद्यः—॥२॥३॥४०॥

सप्तमेऽनुवाके तृतीयः खण्डः।

—शङ्खाय बाभ्रव्याय शङ्खो बाभ्रव्यो दत्ताय कात्यायनये[1] आत्रेयाय दत्तः कात्यायनिरात्रेयः कँसाय वारकये कँसो वारकिः प्रोष्ठपादाय वारक्याय प्रोष्ठपादो वारक्यः[2] कँसाय वारक्याय[3] कँसो वारक्यो जयन्ताय वारक्याय जयन्तो वारक्यः कुबेराय वारक्याय कुबेरो वारक्यो जयन्ताय वारक्याय जयन्तो वारक्यो जनश्रुताय वारक्याय जनश्रुतो वारक्यस्सुदत्ताय[4] पाराशर्याय सुदत्तः पाराशर्योऽषाढायो[5]त्तराय पाराशर्यायाऽषाढ[5] उत्तरः पाराशर्यो विपश्चिते शकुनिमित्राय पाराशर्याय विपश्चिच्छकुनिमित्रः पाराशर्यो जयन्ताय पाराशर्याय जयन्तः पाराशर्यः—॥२॥३॥४१॥

सप्तमेऽनुवाके चतुर्थः खण्डः।

—श्यामजयन्ताय लौहित्याय श्यामजयन्तो लौहित्यः पल्लिगुप्ताय लौहित्याय पल्लिगुप्तो लौहित्यस्सत्यश्रवसे[1] लौहित्याय सत्य-

११—नाय।

१—नायं, कात्यायन—। २ वर—। ३ प—। ४ सुदत्ता, सुदत्ताय।
५ षाढ़ (!), षाढ़—॥

१ लोह—।

श्रवा लौहित्यः कृष्णधृतये सात्यकये कृष्णधृतिस्सात्यकिश्श्याम-सुजयन्ताय लौहित्याय श्यामसुजयन्तो लौहित्यः कृष्णदत्ताय लौहित्याय कृष्णदत्तो लौहित्यो मित्रभूतये लौहित्याय मित्रभूति[२] लौहित्यश्श्यामजयन्ताय लौहित्याय श्यामजयन्तो लौहित्यस्त्रि-वेदाय कृष्णराताय लौहित्याय त्रिवेदः कृष्णरातो लौहित्यो यशस्विने जयन्ताय लौहित्याय[३] यशस्वी जयन्तो लौहित्यो जयकाय लौहित्याय जयको लौहित्यः कृष्णराताय लौहित्याय कृष्णरातो लौहित्यो दक्षजयन्ताय लौहित्याय दक्षजयन्तो लौहित्यो विपश्चिते दृढजयन्ताय लौहित्याय विपश्चिद्दृढजयन्तो लौहित्यो वैपश्चिताय[४] दार्ढजयन्तये दृढजयन्ताय लौहित्याय वैपश्चितो दार्ढ-जयन्तिर्[५]दृढजयन्तो लौहित्यो वैपश्चिताय दार्ढजयन्तये गुप्ताय लौहित्याय ॥१॥ तदेतदमृतं गायत्रमथ यान्यन्यानि गीतानि काम्यान्येव तानि काम्यान्येव तानि ॥२॥३॥४२॥

सप्तमेऽनुवाके पञ्चमः खण्डः। सप्तमोऽनुवाकस्समाप्तः॥

---

२—ति। ३ 'श्यामजयन्तो लौहित्याय' अधिक है। ४ वैविप्—। ५—दृ॥

# [ चतुर्थोऽध्यायः ]

श्वेताश्वो दर्शतो हरिनीलोऽसि हरितस्पृश्नस्समानवुद्धो मा हिंसीः । न मां त्वं वेत्थ प्रद्रव ॥१॥ यदभ्यवचरणोऽ[1]भ्यवैषि स्वपन्तम्पुरुषमकोविदमश्ममयेन[2] वर्मणा वरुणोऽन्तर्दधातु मा ॥२॥ यदभ्यवचरणोऽ[1]भ्यवैषि स्वपन्तम्पुरुषमको विदमयस्मयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥३॥ यदभ्यवचरणोऽ[3]भ्यवैषि स्वपन्तम्पुरुषमकोविदं लोहमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥४॥ यदभ्यवचरणोऽ[2]भ्यवैषि स्वपन्तम्पुरु[4]षमकोविदं रजतमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥५॥ यदभ्यवचरणोऽ[1]भ्यवैषि स्वपन्तम्पुरुषमकोविदं सुवर्णमयेन वर्मणा वरुणोऽन्तर्दधातु मा ॥६॥

आयुर्[5]माता मतिः पिता नमस्त आविशोषय ।
प्रहो नामाऽसि विश्वायुस्तस्मै ते विश्वाहा[6] नमो

नमस्ताम्राय नमो वरुणाय[7] नमो जिघांसते ॥७॥ यक्ष्म राजन्या[8] मां हिंसीः । राजन् यक्ष्म मा हिंसीः । तयोस्संविदानयोस्सर्वमायुर[1]यान्यहम् ॥८॥४।१॥

प्रथमोऽनुवाकस्समाप्तः ।

---

१–णा । २ इति मन्ममयेन । ३ अयाग्य । ४ संक्षेप है । ५ मातन । ६–चाह्वाय । ७ रुणाय । ८ र्ष्म ॥

पुरुषो वै यज्ञः ॥१॥ तस्य यानि चतुर्विंशतिर्वर्षाणि[1] तत्प्रातस्सवनम् । चतुर्विंशत्यक्षरा गायत्री । गायत्रम्प्रातस्सवनम् ॥२॥ तद्वसूनाम् । प्राणा[2] वै वसवः । प्राणा हीदं सर्वं वस्वाददते ॥३॥ स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत्स ब्रूयात्प्राणा[3] वसव इदम्मे प्रातस्सवनं माध्यन्दिनेन सवनेनानुसंतनुतेति । अगदो हैव भवति ॥४॥ अथ यानि चतुश्चत्वारिंशतं वर्षाणि[4] तन्माध्यन्दिनं सवनम् । चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । त्रैष्टुभं माध्यन्दिनं सवनम् ॥५॥ तद्रुद्राणाम् । प्राणा वै रुद्राः । प्राणा हीदं सर्वं रोदयन्ति ॥६॥ स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत स ब्रूयात्प्राणा रुद्रा इदम्मे माध्यन्दिनं सवनं तृतीयसवनेनानुसंतनुतेति । अगदो हैव भवति ॥७॥ अथ यान्यष्टाचत्वारिंशतं वर्षाणि तत् तृतीयसवनम् । अष्टाचत्वारिंशदक्षरा जगती । जागतं तृतीयसवनम् ॥८॥ तदादित्यानाम् । प्राणा वा आदित्याः । प्राणा हीदं सर्वमाददते ॥९॥ स यद्येनमेतस्मिन् काल उपतपदुपद्रवेत्स ब्रूयात्प्राणा आदित्या इदम्मे तृतीयसवनमायुषानुसंतनुतेति । अगदो हैव भवति ॥१०॥ एतद्ध तद्विद्वान् ब्राह्मण

---

१—ति । २—णा । ३ वै अधिक है । ४ वर्षाणि ।

उवाच महिदास ऐतरेय उपतपाति किमिदमुपतपसि योऽहमनेनोपतपता न प्रेष्यामीति । स ह षोडशशतं वर्षाणि जिजीव । प्र ह षोडशशतं वर्षाणि जीवति नैनम्प्राणास्साम्यायुषो जहाति य एवं वेद ॥२१॥४।२॥

द्वितीयोऽनुवाकस्समाप्तः ।

त्र्यायुषं कश्यपस्य जमदग्नेस्त्र्यायुषम् ।
त्रीण्यमृतस्य पुष्पाणि त्रीण्यायूंषि मेऽकृणोः ॥१॥
स नो मयोभूः पितवाविशस्व शान्तिको यस्तनुवे स्योनः ॥२॥
येऽग्नयः पुरीष्याः प्रविष्टाः पृथिवीमनु ।
तेषां त्वमस्युत्तमः प्र णो जीवातवे सुव ॥३॥४।३॥

तृतीयोऽनुवाकस्समाप्तः ।

अरण्यस्य वत्सोऽसि विश्वनामा विश्वाभिरक्षणोऽपाम्पक्वोऽसि वरुणस्य दूतोऽन्तर्धिनाम ॥१॥ यथा त्वममृतोमर्त्येभ्योऽन्तर्हितोऽस्येवं त्वमस्मानघायुभ्योऽन्तर्धेहि । अन्तर्धिरसि स्तेनेभ्यः ॥२॥४।४॥

चतुर्थोऽनुवाकस्समाप्तः ।

---

५ सम्य् ॥

१ त्रियाय्- । २ त्रीण् । ३ आयुंष्वि । ४-तो । ५ चंतोका । ६ य । ७-ओं । ८ प्रा ।

१ विश्वोन्-र्म । २-क्षमा । ३ ऽर्द्धनाम । ४ त । ५ मर्त्तेभ्यो ॥

न्युषि सविता भवस्युदेष्यन् विष्णुरुद्यन्पुरुष उदितो बृहस्पति-रभिप्रयन्मघवेन्द्रो वैकुण्ठो माध्यन्दिने भगोऽपराह्ण[2] उग्रो देवो लोहितायन्नस्तमिते यमो भवसि ॥१॥ अश्नस्तु सोमो राजा निशाया-म्पितृराज[3]स्स्वप्ने मनुष्यान्प्रविशसि पयसा पशून् ॥२॥ त्रिरात्रे भवो भवस्यपररात्रेऽङ्गिरा अग्निहोत्रवेलायाम्भृगुः ॥३॥ तस्य त[4]दे-तदेव मण्डलमूधः । तस्यैतौ स्तनौ यद्वाक् च प्राणश्च । ताभ्या-म्मेधुक्त्वाऽध्याय[5]म्ब्रह्मचर्यम्प्रजाम्पशून् स्वर्गं लोकं सजातवन-स्याम ॥४॥ एता आशिष[6] आशासे । भूर्भुवस्स्वः । उदिते शुक्रमा-दिश[7] । तदात्मन्दधे ॥५॥४॥५॥

पञ्चमोऽनुवाकस्समाप्तः ।

भगेरथो हैक्ष्वाको राजा कामप्रेण यज्ञेन यक्ष्यमाण आस ॥१॥ तदु ह कुरुपञ्चालानाम्ब्राह्मणा[1] ऊचुर्भगेरथो ह वा अयमैक्ष्वाको राजा कामप्रेण यज्ञेन यक्ष्यमाणः[2] । एतेन[3] कथां वदिष्याम इति ॥२॥ तं हाऽभ्येयुः । तेभ्यो[4] हाऽभ्यागतेभ्योऽपचितीश्चकार ॥३॥ अथ हैषां स भाग आवव्राजोप्त्वा[5] केशश्मश्रूणि नखान्निकृत्याऽऽज्ये-

१–श्रो । २ पराह्णे । ३–ज । ४ त । ५–य । ६ आसिष । ७ आदिष ॥

१–पाञ्च– । २ यक्षम– । ३ एततेन । ४ 'भा' अधिक है । ५ उपत्वा

नाऽभ्यज्य दण्डोपानहम्बिभ्रत् ॥४॥ तान् होवाच ब्राह्मणा भगवन्तः कतमो वस्तद्वेद यथाऽऽश्रावितप्रत्याश्राविते देवान् गच्छत इति ॥५॥ अथ होवाच कतमो वस्तद्वेद यद्विदुषस्सूद्गाता सुहोता स्वध्वर्युस्सुमानुषविदाजायत इति ॥६॥ अथ होवाच कतमो वस्तद्वेद यच्छन्दाँसि प्रयुज्यन्ते यत्तानि सर्वाणि संस्तुतान्यभिसम्पद्यन्त इति ॥७॥ अथ होवाच कतमो वस्तद्वेद यथा गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति ॥८॥ अथ होवाच कतमो वस्तद्वेद यथा दक्षिणाः प्रतिगृहीता न हिंसन्तीति ॥९॥४।६॥

षष्ठेऽनुवाके प्रथमः खण्डः ।

एतान् हैनान् पञ्च प्रश्नान् पप्रच्छ ॥१॥ तेषां ह कुरुपञ्चालानाम्बको दाल्भ्योऽनूचान आस ॥२॥ स होवाच यथाऽऽश्रावितप्रत्याश्राविते देवान् गच्छत इति प्राच्यां वै राजन् दिश्याश्रावितप्रत्याश्राविते देवान् गच्छतः । तस्मात्प्राङ्तिष्ठन्नाश्रावयति प्राङ् तिष्ठन्प्रत्याश्रावयतीति ॥३॥ अथ होवाच यद्विदुषस्सूद्गाता सुहोता स्वध्वर्युस्सुमानुषविदाजायत इति यो वै मनुष्यस्य सम्भूतिं वेदेति होवाच तस्य सूद्गाता सुहोता स्वध्वर्युस्सुमानुषवि-

६ ज्या ॥

१-प्राञ्च्-। २ प्रत्य-। ३ सम्-। ६ प्रेञ्च्-।

दाजायत इति प्राणा उ ह वाव राजन् मनुष्यस्य सम्भूतेरेवेति[4]
॥४॥ अथ होवाच यच्छन्दाँसि प्रयुज्यन्ते यत्तानि सर्वाणि
संस्तुतान्यभिसम्पद्यन्त इति गायत्रीमु ह वाव राजन् सर्वाणि
छन्दांसि संस्तुतान्यभिसम्पद्यन्त इति ॥५॥ अथ होवाच यथा
गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति वषट्कारेणो ह
वाव राजन गायत्र्या उत्तमे अक्षरे पुनर्यज्ञमपिगच्छत इति ॥६॥
अथ[5] होवाच यथा दक्षिणाः प्रतिगृहीता न हिंसन्तीति—॥७॥४।७॥

षष्ठेऽनुवाके द्वितीयः खण्डः ।

—यो वै गायत्र्यै मुखं वेदेति होवाच तं दक्षिणा प्रतिगृहीता
न हिंसन्तीति ॥१॥ अग्निर्ह वाव राजन् गायत्रीमुखम् ।
तस्माद्यदग्नावभ्यादधाति[1] भूयानेव स तेन भवति वर्धते[2] । एव-
मेवैवं विद्वान्ब्राह्मणः प्रतिगृह्णन्भूयानेव भवति वर्धत उ एवेति ॥२॥
स होवाचाऽनूचानो वै किलाऽयम्ब्राह्मण आस । त्वामहमनेन
यज्ञेनैमीति ॥३॥ तस्य वै ते तथोद्गास्यामीति होवाच यथै-
कराडेव भूत्वा स्वर्गं लोकमेष्यसीति ॥४॥ तस्मा एतेन गाय-
त्रेणोद्गीथेनोज्जगौ । स हैकराडेव भूत्वा स्वर्गं लोकमियाय ।

४ सम्भूतिदूधुर, सम्भूतिर्खेर । ५ हे ॥
१ प्रदन्–। २–र्धन् । ३ गायत्र सर्वो ।

तेन[४] हैतेनैकराडेव भूत्वा स्वर्गं लोकमेति [य एवं वेद] ॥५॥ ओं वा इति द्वे अक्षरे। ओं वा इति चतुर्थे। ओं वा इति षष्ठे। हुम्भा ओं वागित्यष्टमे ॥६॥ तेन हैतेन प्रतीदर्शो[५]ऽस्य भयदस्याऽऽसमात्यस्योज्जगौ ॥७॥ तं होवाच किं त आगास्यामीति। स होवाच हरीमे देवाश्वा वागायेति। तथेति। तौ हास्मा आजगौ। तौ हैनमाजम्मतुः ॥८॥ स वा एष उद्गीथः कामानां सम्पदों[६] वा३चों वा३चों वा३च् हुम भा ओं वागिति। साङ्गो हैव स तनुरमृतस्सम्भवति य एतदेवं वेदाथो यस्यैवं विद्वानुद्गायति ॥९॥४॥८॥

षष्ठेऽनुवाके तृतीयः खण्डः। षष्ठोऽनुवाकस्समाप्तः॥

---

पुरुषो वै यज्ञः पुरुषो होद्गीथः। अथैत एव मृत्यवो यदग्निर्वायुरादित्यश्चन्द्रमाः ॥१॥ ते ह पुरुषं जायमानमेव मृत्युपाशैरभिदधति। तस्य वाचमेवा[१]ग्निरभिदधाति प्राणं वायुश्चक्षुरादित्यश्श्रोत्रं चन्द्रमाः ॥२॥ तदाहुस्स वा उद्गाता यो यजमानस्य[२] प्राणेभ्योऽधि मृत्युपाशानुन्मुञ्चती[३]ति ॥३॥ तद्यस्यैवं विद्वान् प्रस्तौति य एवास्य वाचि मृत्युपाशस्तमेवास्योन्मुञ्चति ॥४॥ अथ यस्यैवं

---

४ तोन। ५–शो। ६ सम्पद्॥

१ अग्ना। २ यजा–। ३ उमुञ्–।

विद्वानुद्गायति य एवास्य प्राणे मृत्युपाशस्तमेवास्योन्मुञ्चति ॥५॥
अथ यस्यैवं विद्वान् प्रतिहरति य एवास्य चक्षुषि मृत्युपाशस्तमे-
वास्योन्मुञ्चति ॥६॥ अथ यस्यैवं विद्वान्निधनमुपैति य एवास्य
श्रोत्रे मृत्युपाशस्तमेवास्योन्मुञ्चति ॥७॥ एवं वा एवंविदुद्गाता
यजमानस्य प्राणेभ्योऽधिमृत्युपाशानुन्मुञ्चति ॥८॥ तदाहुस्स
वा उद्गाता यो यजमानस्य प्राणेभ्योऽधिमृत्युपाशानुन्मुच्याथैनं
साङ्गं सतनुं सर्वमृत्योस्स्पृणातीति ॥९॥४॥९॥

सप्तमेऽनुवाके प्रथमः खण्डः ।

तद्यस्यैवं विद्वान्हिङ्करोति य एवास्य लोमसु मृत्युपाशस्त-
स्मादेवैनं स्पृणाति ॥१॥ अथ यस्यैवं विद्वान् प्रस्तौति य एवास्य
त्वचि मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥२॥ अथ यस्यैवं विद्वाना-
दिमादत्ते य एवास्य माँसेषु मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥३॥
अथ यस्यैवं विद्वानुद्गायति य एवास्य स्नावसु मृत्युपाशस्तस्मा-
देवैनं स्पृणाति ॥४॥ अथ यस्यैवं विद्वान्प्रतिहरति य एवास्याङ्गेषु
मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥५॥ अथ यस्यैवं विद्वानुपद्रवति य
एवास्यास्थिषु मृत्युपाशस्तस्मादेवैनं स्पृणाति ॥६॥ अथ यस्यैवं

---

४–द्गा । ५ उद्गायति । ६ प्राणे । ७ नास्ति । ८ प्रतिहरति ॥
१ क्व– । २ या ।

विद्वान् निधनमुपैति य एवास्य मज्जसु मृत्युपाशस्स तस्मादेवैनं स्पृणाति ॥७॥ एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्येऽधि-मृत्युपाशानुन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योस्सपृणाति ॥८॥ तदा-हुस्स वा उद्गाता यो यजमानस्य प्राणेभ्योऽधिमृत्युपाशानुन्मुच्याथैनं साङ्गं सतनुं सर्वमृत्योस्स्पृत्वा स्वर्गे लोके सप्तधा दधातीति ॥९॥ स वा एष इन्द्र वैमृध उद्यन् भवति सवितोदितो मित्रस्संगवकाल[३] इन्द्रो वैकुण्ठो मध्यन्दिने समावर्तमानश्शर्व उग्रो देवो लोहितायन् प्रजापतिरेव संवेशो[४]ऽस्तमितः ॥१०॥ तद्यस्यैवं विद्वान् हिङ्करोति य एवास्योद्यत[५]स्स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥११॥ अथ यस्यैवं विद्वान् प्रस्तौति य एवास्योदिते स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥१२॥ अथ यस्यैवं विद्वानादिमादत्ते य एवास्य संगवकाले[३] स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥१३॥ अथ यस्यैवं विद्वानुद्गायति य एवास्य मध्यन्दिने[६] स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥१४॥ अथ यस्यैवं विद्वान् प्रतिहरति य एवास्यापराह्णे स्वर्गो लोकस्तस्मिन्ने-वैनं दधाति ॥१५॥ अथ यस्यैवं विद्वानुपद्रवति य[७] एवास्यास्तं-[८] यतस्स्वर्गो[५] लोकस्तस्मिन्नेवैनं दधाति ॥१६॥ अथ यस्यैवं विद्वान्नि-

---

३ सम्भवक-। ४-५,-ओजनायां गमा। ५-श्र। ६ माध्न-। ७ स्र। ८ पेवा।

धनमुपैति य एवास्यास्तमिते स्वर्गो लोकस्तस्मिन्नेवैनं दधाति ॥१७॥
एवं वा एवंविदुद्गाता यजमानस्य प्राणेभ्योऽधिमृत्युपाशानुन्मु-
च्याथैनं साङ्गं सतनुं सर्वमृत्योस्स्पृत्वा स्वर्गे लोके सम्पधा[1]
दधाति ॥१८॥४।१०॥

सप्तमेऽनुवाके द्वितीयः खण्डः । सप्तमोऽनुवाकस्समाप्तः ॥

---

षड्[1] ह[2] वै देवतास्स्वयम्भुवोऽग्निर्वायुरसावादित्यः प्राणोऽन्नं
वाक् ॥१॥ ताश्[3]श्रैष्ठ्ये[4] व्यवदन्ता[5]ऽहं श्रेष्ठा[6]ऽस्म्यहं श्रेष्ठा[7]ऽस्म्य्? [स्मि]
मां श्रियमुपाध्वमिति ॥२॥ ता अन्योन्यस्यै[8] श्रेष्ठतायै नाऽतिष्ठन्त ।
ता अब्रुवन्न वा अन्योन्यस्यै[7] श्रेष्ठतायै तिष्ठामहे[8] एता[9] सम्प्रब्रवामहै
यथा श्रेष्ठास्स्म[3] इति ॥३॥ ता अग्निमब्रुवन्कथं[10] त्वं श्रेष्ठोऽसीति ॥४॥
सोऽब्रवीदहं देवानाम्मुखमस्म्यहमन्यासाम्प्रजानाम् । मयाऽऽहुतयो
हूयन्ते । अहं देवानामन्नं विकरोम्य[11]हम्मनुष्याणाम् ॥५॥ स यन्न[12]
स्याममुखा एव देवास्स्युरमुखा अन्याः प्रजाः । नाऽऽहुतयो हूयेरन्[13] ।
न देवानामन्नं विक्रियेत[14] न मनुष्याणाम् ॥६॥ तत इदं सर्वम्परा-

---

९ सप्त ॥

१ षड्ढ । २ ड । ३–श्रा । ४–ठे । ५ व्यवदन्– । ६ श्रेष्– ।
७ आन्या– । ८–हे । ९ एत । १० त्वा । ११–कार्– । १२ न्न ।
१३ हूयन्ते (!) लिख कर हुयरन् (!) किया गया । १४–प ।

भवेत्ततो न किंचन परिशिष्ये[15]तेति ॥७॥ एवमेवेति होचुर्नैवे[18]ह किंचन परिशिष्येत यत्[16] त्वं न स्या इति ॥८॥ अथ वायुमब्रुवन्कथमु त्वं श्रेष्ठोऽसीति ॥९॥ सोऽब्रवीदहं देवानाम्प्राणोऽस्म्यह[17]मन्यासाम्प्रजानाम् । यस्मादहमुत्क्रामामि ततस्स प्रम्लवते ॥१०॥ स यदहं न स्यां तत इदं सर्वम्पराभवेत्ततो न किंचन परिशिष्येतेति ॥११॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत[16] यत्त्वं न स्या इति ॥१२॥४।११॥

अष्टमेऽनुवाके प्रथमः खण्डः ।

अथादित्यमब्रुवन् कथमु त्वं श्रेष्ठोऽसीति ॥१॥ सोऽब्रवीदहमेवोद्यन्नहर्भवाम्यहमस्तंयन्रात्रिः । मया चक्षुषा कर्माणि क्रियन्ते । स यदहं न स्यां नैवाहस्स्यान्न[1] रात्रिः । न कर्माणि क्रियेरन् ॥२॥ तत इदं सर्वम्पराभवेत्ततो न किंचन परिशिष्येतेति ॥३॥ एवमे[2]वेति होचुर्नैवेह किंचन परिशिष्येत यत्त्वं न स्या इति ॥४॥ अथ प्राणमब्रुवन् कथमु[3] त्वं श्रेष्ठोऽसीति ॥५॥ सोऽब्रवीत्प्राणो भूत्वाऽग्निर्दीप्यते । प्राणो भूत्वा वायुराकाश[4]मनुभवति । प्राणो भूत्वाऽऽदित्य उदेति । प्राणादन्नम्प्राणाद्वाक् ॥६॥ स यदहं न स्यां तत[5]

---

१५–ष्ये । १६ य । १७ अहहम् । १८ ऽव ह ॥
१ ह्नंन । २ प । ३ उक् । ४ अंक्– । ५ तत् (!) ।

इदं[6] सर्वम्पराभवेत्ततो न किंचन परिशिष्येतेति ॥७॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत्त्वं न स्या इति ॥८॥ अथान्न-मब्रुवन् कथमु[9] त्वं श्रेष्ठमसीति ॥९॥ तदब्रवीन्मयि प्रतिष्ठायाग्निर्दी-प्यते । मयि प्रतिष्ठाय वायुराकाशमनुविभवाति । मयि प्रतिष्ठाया-दित्य उदेति । मदेव प्राणो मद्वाक् ॥१०॥ स यदहं न स्यां[5] तत इदं[7] सर्वम्पराभवेत्ततो न किंचन परिशिष्येतेति ॥११॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत्त्वं न स्या इति ॥१२॥ अथ वाचमब्रुवन् कथमु[9] त्वं श्रेष्ठासीति ॥१३॥ साब्रवीन्मयैवेदं विज्ञायते मयाऽदः । स यदहं न स्यां नैवेदं विज्ञायेत नाऽदः ॥१४॥ तत[5] इदं सर्वम्पराभवेन् नैवेह किंचन परिशिष्येते[8]ति ॥१५॥ एवमेवेति होचुर्नैवेह किंचन परिशिष्येत यत्त्वं न स्या इति ॥१६॥४॥१२॥

अष्टमेऽनुवाके द्वितीयः खण्डः ।

ता अब्रुवन्नेता वै किल सर्वा देवताः । एकैकामेवानुस्मः[1] । स यन्नु नस्सर्वासां देवतानामेकाचन न स्यात्तत इदं सर्वम्परा-भवेत्ततो न किंचन परिशिष्येत । हन्त सार्धं समेत्य[2] यच्छ्रेष्ठं

---

६ संक्षेप करते हैं । 'स ( ! न के स्थान में ) स्या इति' यहां तक छोड़ दिया है । ७ इ–,त्य् (!) संक्षिप्त दिया है । ८–शिष्य । ९ तुर ॥

१–स्म । २ साम्–।

तदसामेति ॥१॥ ता एतस्मिन् प्राण[3] ओंकारे वाच्यकारे[4] समायन्। तद्यत्समायन् तत्साम्नस्सामत्वम् ॥२॥ ता अब्रुवन् यानि नो मर्त्यान्यनपहतपाप्मान्यक्षराणि तान्युद्धृत्यामृ[5]तेष्वपहतपाप्मसु[6] शुद्धेष्वक्षरेषु गायत्रं गायामाऽग्नौ वायावादित्ये प्राणेऽन्ने वाचि। तेना[7]पहत्य[8] मृत्युमपहत्य पाप्मानं[9] स्वर्गं लोकमियामेति॥३॥ एषाग्नेरमृतमपहतपाप्म शुद्धमक्षरम्। ग्निरित्यस्य मर्त्यमनपहतपाप्माऽक्षरम् ॥४॥ वेति वायोरमृतमपहतपाप्म शुद्धमक्षरम्। युरित्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥५॥ एत्यादित्यस्याऽमृतमपहतपाप्म शुद्धमक्षरम्। त्येत्यस्य[10] मर्त्यमनपहतपाप्माक्षरम् ॥६॥ प्रेति प्राणस्यामृतमपहतपाप्म शुद्धमक्षरम्[11]। णेत्यस्य[12] मर्त्यमनपहत पाप्माक्षरम्॥७॥ एत्यन्नस्यामृतमपहतपाप्म शुद्धमक्षरम्। नमित्यस्य मर्त्यमनपहतपाप्माक्षरम् ॥८॥ वेति वाचोऽमृतमपहतपाप्म शुद्धमक्षरम्। गित्यस्यै मर्त्यमनपहतपाप्माक्षरम् ॥९॥ ता एतानि मर्त्यान्यनपहतपाप्मान्यक्षराण्युद्धृत्याऽमृतेष्वपहतपाप्मसु[13] शुद्धेष्वक्षरेषु गायत्रमागायन्नग्नौ वायावादित्ये प्राणेऽन्ने वाचि। तेनाप-

---

३–णे। ४ वाच्च्। ५–त्यें। ६ अम्–(!)। ७ येन। ८–त। ९–न। १० त्य इत्य्। ११ 'वेदिवाचो मृत' अधिक है पर लाल रङ्ग से काटा गया है। १२ णा इत्य्। १३–मासु॥

हत्य मृत्युमपहत्य पाप्मानं स्वर्गं लोकमायन् ॥१०॥ अपहत्य मृत्यु॰ मपहत्य पाप्मानं स्वर्गं लोकमेति य एवं वेद ॥११॥४।१३॥

अष्टमेऽनुवाके तृतीयः खण्डः ।

ता अब्रुवन्त्वयि प्रतिष्ठायैतमुपगच्छामेति । ता अब्रवीदास्येन[1] प्राणेन युष्मानास्येन[2] प्राणेन मामुपाप्नवाथेति ॥१॥ ता एतेन प्राणेनौकारेण वाच्यकारमभिनिमेष्यन्त्यो[10] हिङ्काराद्धकारमोकारेण वाचमनुस्वरन्त्य उभाभ्याम्प्राणाभ्यां गायत्रमगायन्नोवा३चोवा३चोवा३च् हुम् भा वो वा इति ॥२॥ स यथोभयापदी प्रतितिष्ठत्येवमेव[3] स्वर्गे लोके प्रत्यातिष्ठन् । प्रति स्वर्गे लोके तिष्ठति य एवं वेद ॥३॥ य उ ह वा एवं विदस्माल्लोकात्प्रैति स प्राण एव भूत्वा वायुमप्येति वायोरध्यभ्राण्यभ्रेभ्योऽधि वृष्टिं[4] वृष्ट्यैवेमं[5] लोकमनुविभवति ॥४॥ ऋषयो ह सत्रमासां चक्रिरे । ते पुनः पुनर्वह्वीभिर्वह्वीभिः प्रतिपद्भिस्स्वर्गस्य लोकस्य द्वारं नानुचन बुबुधिरे ॥५॥ स च श्रमेण तपसा व्रतचर्येणेन्द्रमवरुरुधिरे ॥६॥ तं होचुस्स्वर्गं वै लोकमैप्सिष्म[6] । ते पुनः पुनर्वह्वीभिर्वह्वीभिः[7] प्रतिपद्भिस्स्वर्गस्य लोकस्य द्वारं नानुचनाऽभुत्स्महि[8] ।-

१ आस्येनेन । २-आ,-आँन् । ३-अत । ४ पृ- । ५-ष्ट्- । ६ ऐप्सिष्ट । ७ 'वह्वीभिर्' अधिक है । ८ ऽभूत्- । १० मेषन्त- ।

तथा नोऽनुशाधि यथा स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायाऽनार्तास्स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमियामेति ॥७॥ तान् होवाच को वस्स्थविरतम इति[१] ॥८॥४।१४॥

अष्टमेऽनुवाके चतुर्थः खण्डः ।

अहमित्यगस्त्यः ॥१॥ स वा एहीति होवाच तस्मै वै[१] तेऽहं तद्वक्ष्यामि[२] यद्विद्वाँसस्स्वर्गस्य लोकस्य[३] द्वारमनुप्रज्ञायाऽनार्तास्स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमेष्यथेति ॥२॥ तस्मा एतं गायत्रस्योद्गीथमुपनिषदममृतमुवाचाऽग्नौ वायावादित्ये[४] प्राणेऽन्ने वाचि ॥३॥ ततो वै ते स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायाऽनार्तास्स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमायन् ॥४॥ एवमेवैवं विद्वान् स्वर्गस्य लोकस्य द्वारमनुप्रज्ञायाऽनार्तस्स्वस्ति संवत्सरस्योदृचं गत्वा स्वर्गं लोकमेति ॥५॥४।१५॥

अष्टमेऽनुवाके पञ्चमः खण्डः । अष्टमोऽनुवाकस्समाप्तः ॥

---

एवं वा एतं गायत्रस्योद्गीथमुपनिषदममृतमिन्द्रोऽगस्त्यायो[२]वाचाऽगस्त्य इषाय श्यावाश्वय[१] इषश्श्यावाश्विर्गौषूक्तये गौषूक्ति-

---

६ 'अहमित्य्' (!) अधिक है ॥

१ नास्ति । २–क्षामि । ३ 'द्वारमयैवं' अधिक है । ४ वाय् ॥

१–गीत्–। २–आवो ।

ज्वालायनाय[३] ज्वालायनश्शाट्यायनये[४] शाट्यायनी रामाय क्रातुजातेयाय वैयाघ्रपद्याय[५] रामः क्रातुजातेयो वैयाघ्रपद्यः–॥१॥४।१६॥

नवमेऽनुवाके प्रथमः खण्डः ।

–शङ्खाय बाभ्रव्याय शङ्खो बाभ्रव्यो दत्ताय कात्यायनय[१] आत्रेयाय दत्तः कात्यायनिरात्रेयः कँसाय वारक्याय[२] कँसो वारक्यस्सुयज्ञाय शाण्डिल्याय सुयज्ञश्शाण्डिल्योऽग्निदत्ताय शाण्डिल्यायाऽग्निदत्तश्शाण्डिल्यस्सुयज्ञाय शाण्डिल्याय सुयज्ञश्शाण्डिल्यो जयन्ताय वारक्याय जयन्तो वारक्यो जनश्रुताय वारक्याय जनश्रुतो वारक्यस्सुदत्ताय[३] पाराशर्याय ॥१॥ सैषा[४] शाट्यायनी गायत्रस्योपनिषदेवमुपासितव्या ॥२॥४।१७॥

नवमेऽनुवाके द्वितीयः खण्डः । नवमोऽनुवाकस्समाप्तः ॥

---

केनेषितम्पतति प्रेषितम्मनः केन प्राणः प्रथमः प्रैति युक्तः ।
केनेषितां वाचमिमां वदन्ति चक्षुश्श्रोत्रं क उ देवो युनक्ति ॥१॥
श्रोत्रस्य श्रोत्रम्मनसो मनो यद् वाचो ह वाचं स उ प्राणस्य प्राणः ।
चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्याऽस्माल्लोकादमृता भवन्ति ॥२॥

---

३ ज्वा–। ४–यये। ५ वार्घ्या–॥

१–अय । २ पू– ३–श्रो, और 'जनश्रुताय वारक्याय जनश्रुते (!) वारक्यस्' अधिक है। ४–श्रो ।

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनः ।

न विद्म[1] न विजानीमो[2] यथैत[3]दनुशिष्यात्[4] ॥३॥

अन्यदेव तद् विदितादथो अविदितादधि ।

इति शुश्रुम[5] पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥४॥

यद् वाचाऽनभ्युदितं येन वागभ्युद्यते ।

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥५॥

यन्मनसा न मनुते येनाऽऽहुर्मनो[6] मतम् ।

तदेव ब्रह्म त्वं विद्धि मेदं यदिदमुपासते ॥६॥

यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥७॥

यच्छ्रोत्रेण[8] न शृणोति येन श्रोत्रमिदं श्रुतम् ।

तदेव[9] ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥८॥

यत् प्राणेन न प्राणिति[10] येन प्राणः प्रणीयते ।

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥९॥४।१८॥

दशमेऽनुवाके प्रथमः खण्डः ।

यदि मन्यसे सुवेदेति दह्रमेवाऽपि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेषु । अथ नु मीमांस्यमेव ते मन्येऽविदितम् ॥ १ ॥

---

१ विदु । २-म । ३ ऽवै अधिक है । ४-शिष्-। ५-श्रू-। ६ मन्यो । ७ मतेम् । ८ नश् । ९ उक्तानुक्त है । १०-णीति ॥

नाऽहम्मन्ये सुवेदेति नो न वेदेति वेद च ।
यो नस्तद् वेद तद्वेद नो न वेदेति वेद च ॥२॥
यस्याऽमतं तस्य मतम्मतं[1] यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥३॥
प्रतिबोधविदितम्मतम[2]मृतत्वं हि विन्दते ।
आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥४॥
इह चेदवेदीदथ सत्यमस्ति । न चेदिहाऽवेदीन्महतीविनष्टिः ।
भूतेषु-भूतेषु विविच्य धीराः प्रेत्याऽस्माल्लोकादमृता भवन्ति॥५॥४।१९

दशमेऽनुवाके द्वितीयः खण्डः ।

ब्रह्म ह देवेभ्यो विजिग्ये । तस्य ह ब्रह्मणो विजये देवा अमहीयन्त । त ऐक्षन्ताऽस्माकमेवाऽयं विजयः । अस्माकमेवाऽयं महिमेति ॥१॥ तद्धैषां विजज्ञौ । तेभ्यो ह प्रादुर्बभूव । तन्न व्यजानन्त[1] किमिदं यक्षमिति ॥२॥ तेऽग्निमब्रुवञ्जातवेद एतद् विजानीहि किमेतद् यक्षमिति । तथेति ॥३॥ तद[2]भ्यद्रवत् । तमभ्यवदत् कोऽसीति । अग्निर्वा[3] अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥४॥ तस्मिँ-

---

१ अम्-। २-वित्-॥

१-अत । २-म । ३ ऽहम ।

स्त्वयि किं वीर्यमिति । अपीदं सर्वं दहेयम् यदिदम्पृथिव्यामिति ॥५॥
तस्मै तृणं निदधावेतद्दहेति । तदुपप्रेयाय सर्वजवेन । तन्न शशाक दग्धुम् ।
स तत एव निववृते नैनदशकं विज्ञातुं यदेतद्यक्षमिति ॥६॥ अथ
वायुमब्रुवन् वायवेतद् विजानीहि किमेतद् यक्षमिति । तथेति ॥७॥
तद[4]भ्यद्रवत् । तमभ्यवदत् कोऽसीति । वायुर्वा अहमस्मीत्यब्रवी-
न्मातरिश्वा वा अहम[3]स्मीति ॥८॥ तस्मिँस्त्वयि किं वीर्यमिति ।
अपीदं सर्वमाददीय यदिदम्पृथिव्यामिति ॥९॥ तस्मै तृणं
निदधावेतदादत्स्वेति । तदुपप्रेयाय सर्वजवेन । तन्न शशाका-
ऽऽदातुम् । स तत एव निव[5]वृते नैनदशकं विज्ञातुं यदेतद्यक्षमिति ॥१०॥
अथेन्द्रमब्रुवन् मघवन्नेतद् विजानीहि किमेतद् यक्षमिति । तथेति ।
तद[6]भ्यद्रवत् । तस्माव् तिरोऽदधे ॥११॥ स तस्मिन्नेवाऽऽकाशे
स्त्रियमाजगाम बहु शोभमानामुमां हैमवतीम् । तां होवाच किमेतद्
यक्षमिति ॥१२॥४।२०॥

दशमेऽनुवाके तृतीयः खण्डः ।

ब्रह्मेति होवाच ब्रह्मणो वा एतद् विजये महीयध्व इति । ततो
हैव विदांचकार ब्रह्मेति ॥१॥ तस्माद्वा एते देवा अतितरामि-

---

४–म । ५ निववृंत । ६ म (!) ।

ान्यान् देवान् यदग्निर्वायुरिन्द्रः । ते ह्येनन्नेदिष्ठम्[1]पस्पृशुस्[2] ह्येनत्[3] प्रथमो विदांचकार ब्रह्मेति ॥२॥ तस्माद् वा इन्द्रोऽतितरामिवा-ऽन्यान् देवान् । स ह्येनन्नेदिष्ठम्पस्पर्श स ह्येनत् प्रथमो विदांचकार ब्रह्मेति ॥३॥ तस्यैष आदेशो यदेतद् विद्युतो[4] व्यद्युतदा३ इति[5] । न्यमिषदा३[6] । इत्यधिदेवतम् ॥४॥ अथाऽध्यात्मम् । यदेनद् गच्छतीव च मनोऽनेन चैनदुपस्मरत्यभीक्ष्णं संकल्पः[7] ॥५॥ तद्ध तद्वनं नाम । तद्वनमित्युपासितव्यम् । स य एतदेवं वेदाऽभिहैनं सर्वाणि भूतानि संवाञ्छन्ति[8] ॥६॥ उपनिषदम्भो ब्रूहीति । उक्ता त उपनिषत् । ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥७॥ तस्यै तपो दमः कर्मेति प्रतिष्ठा[9] वेदास्सर्वाङ्गाणि सत्यमायतनम् ॥८॥ यो[10] वा एतामेवं वेदाऽपहत्य पाप्मानमनन्ते स्वर्गे लोकेऽज्येये प्रतितिष्ठति ॥९॥४।२१।

दशमेऽनुवाके चतुर्थःखण्डः । दशमोऽनुवाकस्समाप्तः॥

---

१ नेदिष्मा, नेदिष्ठम् । २ ते । ३ अन् । ४ विद्यु । ५ इती३ । ६ मीष् । ७ सुक् । ८ सम्वँछन्ति । ९ ओ । १०—ए ॥

आशा वा[१] इदमग्र आसीद्भविष्यदेव[२]। तद्भवत्। ता आपोऽभवन् ॥१॥ तास्तपोऽतप्यन्त। तास्तपस्तेपाना हुस्सिसेव प्राचीः प्राश्वसन्। स वाव प्राणोऽभवत् ॥२॥ ताः प्राण्याऽपानन्। स वा अपानोऽभवत् ॥३॥ ता अपान्य[३] व्यानम्[४]। स वाव व्यानोऽभवत् ॥४॥ ता व्यान्य समानन्। स वाव समानोऽभवत् ॥५॥ तास्समान्योदानन्। स वा उदानोऽभवत् ॥६॥ तदिदमेकमेव सधमाध्र[५]मासीदविविक्तम् ॥७॥ स नामरूपमकुरुत[६]। तेनैनद्व्यविनक्[७]। वि ह पाप्मनो विच्यते य एवं वेद ॥८॥ तदसौ वा आदित्यः प्राणोऽग्निरपान[८][९] आपो व्यानो दिशस्समानश्चन्द्रमा उदानः ॥९॥ तद्वा एतदेकमभवत्प्राण एव। स य एवमेतदेकम्भवद्वेदैवं हैतदेकधा भवतीत्येकधैव श्रेष्ठस्स्वानाम्भवति[१०] ॥१०॥ तदग्निर्वै प्राणो वागिति पृथिवी वायुर्वै प्राणो वागित्यन्तरिक्षमादित्यो वै प्राणो वागिति द्यौर्दिशो वै प्राणो वागिति श्रोत्रं चन्द्रमा वै प्राणो वागिति मनः पुमान्वै प्राणो वागिति स्त्री॥११॥ तस्येदं सृष्टं शिथिलम्भुवनमासीदपर्याप्तम् ॥१२॥ स मनोरूपमकुरुत।

---

१ 'आशा वा' का पुनः पाठ है। २ येद्। ३ अपान। ४ ए-। ५-मावम्। ६-रैपम्। ७-विनोत्। ८-ह्म्। ९ उपा-।१० स्वॅ-॥

तेन तत्पर्याप्नोत् । दृढं ह वा अस्येदं सुष्टमशिथिलम्भुवनम्पर्याप्तम्भवति य एवं वेद ॥१३॥४।२२॥

एकादशेऽनुवाके प्रथमः खण्डः ।

सैषा[1] चतुर्धा विहिता[2] श्रीरुद्गीथस्सामाक्यं ज्येष्ठब्राह्मणम् ॥१॥ प्राणो वावोद्वाग्गी[3] स उद्गीथः ॥२॥ प्राणो वावामो वाक् सा तत्साम ॥३॥ प्राणो वाव को वागृक् तदर्क्यम् ॥४॥ प्राणो वाव ज्येष्ठो वाग्ब्राह्मणं तज्ज्येष्ठब्राह्मणम् ॥५॥ उपनिषदम्भो ब्रूहीति[4] । उक्ता त उपनिषद्यस्य ते धातव उक्ताः[5] । त्रिधातु विषु वाव त उपनिषदम[6]ब्रूमेति ॥ ६ ॥ एतच्छुक्लं कृष्णं ताम्रं सामवर्णा इति ह स्माह यदैव[7][8] शुक्लकृष्णे ताम्रो वर्णोऽभ्यवैति स वै ते दृङ्क्ते[9] दशमं[10] मानुषमिति त्रिधातु । स ऐक्षत क नु म उत्तानाय[11] शयानायेमा देवता बलिं हरेयुरिति ॥७॥४।२३॥

एकादशेऽनुवाके द्वितीयः खण्डः ॥

स पुरुषमेव प्रपदनायाऽवृणीत ॥१॥ तम्पुरस्तात्प्रसन्नम्प्रा-

---

१ ऽसाश् । २ विहीता । ३ ग्गगीः, गीः । ४ ब्रू ।५–ग्नः। ६–षदु ।
७–दा । ८ वे । ९–त । १० दश्श; श् के पूर्व एक अक्षर पढ़ा नहीं जाता, कदाचित् कटा है । ११ उक्तानाय ॥

विशत्। तस्मा उरुरभवत्। तदुरस उरस्त्वम् ॥२॥ तस्मा अत्रसद् एता देवता बलिं हरन्ति ॥३॥ वाचमनुहरन्तीमग्निरस्मै बलिं हरति ॥४॥ मनोऽनुहरच्चन्द्रमा अस्मै बलिं हरति ॥५॥ चक्षुरनुहरदादित्योऽस्मै बलिं हरति ॥६॥ श्रोत्रमनुहरादिशोऽस्मै बलिं हरन्ति ॥७॥ प्राणमनुहरन्तं वायुरस्मै बलिं हरति ॥८॥ तस्यैते निष्खाताः[2] पन्था बलिवाहना[3] इमे प्राणाः। एवं हैतं निष्खाताः पन्था बलिवाहनास्सर्वतोऽपियन्ति[4] प्राणा य एवं वेद ॥९॥ सा हैषा ब्रह्मासन्दीमारूढा। आ हास्मै ब्रह्मासन्दीं हरन्त्यधि[5] ह ब्रह्मासन्दीं रोहति य एवं वेद ॥१०॥ तदेतद् ब्रह्मयशश्[6] श्रिया परिस्टढम्। ब्रह्म ह तु सन् यशसा श्रिया परिस्टढो भवति य एवं वेद ॥११॥ तस्यैष आदेशो[8] योऽयं दक्षिणोऽक्षन्नन्तः। तस्य यच्छुक्लं तदृचां रूपं यत्कृष्णं तत्साम्नां यदेव ताम्रमिव बभ्रुरिव[8] तद्यजुषाम्[7] ॥१२॥ य एवायं चक्षुषि पुरुष एष इन्द्र एष प्रजापतिस्समः पृथिव्या सम आकाशेन समो दिवा समस्सर्वेण भूतेन। एष परो दिवो दीप्यते। एष एवेदं सर्वमित्युपासितव्यम् ॥१३।४।२४॥

एकादशोऽनुवाके तृतीयः खण्डः।

---

१ अदित्य। २ आ। ३ बलिवाह। ४ ऽपय्। ५ हरन्ति। ६-श। ७ आ। ८-कर्॥

सचाऽसचाऽसच सच वाक् च मनश्च [मनश्च] वाक् च चक्षुश्च[1] श्रोत्रं च श्रोत्रं च चक्षुश्च श्रद्धा च तपश्च तपश्च श्रद्धा च तानि षोडश ॥१॥ षोडशकलम्ब्रह्म । स य एवमेतत् षोडशकलम्ब्रह्म वेद तमेवैतत् षोडशकलम्ब्रह्माऽप्येति ॥२॥ वेदो ब्रह्म तस्य सत्यमायतनं शमः प्रतिष्ठा दमश्च ॥३॥ तद्यथा श्वः प्रैष्यन् पापात्कर्मणो जुगुप्सेतैवमेवाऽहरहः पापात्कर्मणो जुगुप्सेताऽऽकालात् ॥४॥ अथैषां दशपदी विराट् ॥५॥ दश पुरुषे स्वर्गनरकाणि । तान्येनं स्वर्गे गतानि स्वर्गं गमयन्ति नरकं गतानि नरकं गमयन्ति ॥६।४।२५॥

एकादशेऽनुवाके चतुर्थः खण्डः ।

मनो नरको वाङ् नरकः प्राणो नरकश्च चक्षुर्नरकश्श्रोत्रं नरकस्त्वङ् नरको हस्तौ नरको गुदं नरकश्शिश्नं नरकः पादौ नरकः ॥१॥ मनसा परीक्ष्याणि[1] वेदेति वेद ॥२॥ वाचा रसान्वेदेति वेद ॥३॥ प्राणेन गन्धान्वेदेति वेद ॥४॥ चक्षुषा रूपाणि वेदेति वेद ॥५॥ श्रोत्रेण शब्दान्वेदेति वेद ॥६॥ त्वचा संस्पर्शान्वेदेति वेद ॥७॥ हस्ताभ्यां कर्म्माणि वेदेति वेद ॥८॥ उदरेणा-

---

१--अश् ॥

१—क्षा ॥

ऽश्नयां वेदेति वेद ॥९॥ शिश्नेन रामान्वेदेति वेद ॥१०॥ पादाभ्यामध्वनो वेदेति वेद ॥११॥ प्लक्षस्य प्रास्रवणस्य प्रादेशमात्रादुदक् तत्पृथिव्यै मध्यम् । अथ यत्रैते सप्तर्षयस्तद्दिवो मध्यम् ॥१२॥ अथ यत्रैत ऊषास्तत्पृथिव्यै हृदयम् । अथ यदेतत्कृष्णं चन्द्रमसि तद्दिवो हृदयम् ॥१३॥ स य एवमेते द्यावापृथिव्योर्मध्ये च हृदये च वेद नाऽ[2]कामो[3]ऽस्माल्लोकात्प्रैति ॥१४॥ नमोऽतिसामायै[4]ऽतुरेताय[5] धृतराष्ट्राय पार्थुश्रवसाय[6] ये च प्राणं रक्षन्ति ते मा रक्षन्तु । स्वस्ति । कर्मेति गार्हपत्यश्श्रम[7] इत्याहवनीयोदम इत्यन्वाहार्यपचनः ॥१५।४।२६॥

एकादशोऽनुवाके पञ्चमः खण्डः । एकादशोऽनुवाकस्समाप्तः ॥

---

कस्सविता । का सावित्री । अग्निरेव सविता । पृथिवी सावित्री ॥१॥ स यत्राऽग्निस्तत्पृथिवी यत्र वा पृथिवी तदग्निः । ते द्वे योनी । तदेकम्मिथुनम् ॥२॥ कस्सविता । का सावित्री । वरुण एव सविता । आपस्सावित्री ॥३॥ स यत्र वरुणस्तदापो यत्र वा[1]ऽऽपस्तद्वरुणः । ते द्वेयोनी । [ तदेकम्मिथुनम् ] ॥४॥

---

२–वद् । ३–कोमो । ४–सामय–सामाय । ५ एतुर् । ६ पार्ज्जुश्र्–से ठीक किया हुआ है । ७–मय् ॥

कस्सविता[2]। का सावित्री। वायुरेव सविता। आकाशस्सावित्री ॥५॥ स यत्र वायुस्तदाकाशो यत्र वाऽऽकाशस्तद्वायुः। ते द्वे[2] योनी। तदेकम्मिथुनम् ॥६॥ कस्सविता[1]। का सावित्री। यज्ञ एव सविता। छन्दांसि सावित्री ॥७॥ स यत्र यज्ञस्तच्छन्दांसि यत्र वा छन्दांसि तद्यज्ञः। ते[1] द्वे योनी। तदेकम्मिथुनम् ॥८॥ कस्सविता[2]। का सावित्री। स्तनयित्नुरेव सविता। विद्युत् सावित्री ॥९॥ स यत्र स्तनयित्नुस्तद्विद्युद्यत्र वा विद्युत्[3] तत्स्तनयित्नुः। ते द्वे[2] योनी। तदेकम्मिथुनम् ॥१०॥ कस्सविता[1]। का सावित्री। आदित्य एव सविता। द्यौस्सावित्री ॥११॥ स यत्राऽऽदित्यस्तद्द्यौर्यत्र वा द्यौस्तदादित्यः। ते[1] द्वे योनी। तदेकम्मिथुनम् ॥१२॥ कस्सविता[2]। का सावित्री। चन्द्र एव सविता। नक्षत्राणि सावित्री ॥१३॥ स यत्र चन्द्रस्तन्नक्षत्राणि यत्र वा नक्षत्राणि तच्चन्द्रः। ते[1] द्वे योनी। तदेकम्मिथुनम् ॥१४॥ कस्सविता[2]। का सावित्री। मन एव सविता। वाक् सावित्री ॥१५॥ स यत्र मनस्तद्वाग्यत्र [वा] वाक् तन्मनः। ते[2] द्वे योनी। तदेकम्मिथुनम् ॥१६॥ कस्सविता[2]। का सावित्री। पुरुष [एव] सविता। स्त्री सावित्री। स यत्र पुरुषस्तत् स्त्री[4] यत्र वा स्त्री तत्पुरुषः। ते द्वे योनी। तदेकम्मिथुनम् ॥१७॥४॥२७॥

द्वादशेऽनुवाके प्रथमः खण्डः।

---

१ पूर्ण २ श्लेष किया गया है। ३–उत्। ४–ई: (!)

तस्या एष प्रथमः पादो भूस्तत्सवितुर्वरेण्यमिति । अग्निर्वै वरेण्यम् । आपो वै वरेण्यम् । चन्द्रमा वै वरेण्यम् ॥१॥ तस्या एष द्वितीयः पादो भर्गमयो भुवो भर्गो देवस्य धीमहीति । अग्निर्वै भर्गः । आदित्यो वै भर्गः । चन्द्रमा वै भर्गः ॥२॥ तस्या एष तृतीयः पादस्स्वर्धियो यो नः प्रचोदयादिति । यज्ञो वै प्रचोदयाति । स्त्री च वै पुरुषश्च[1] प्रजनयतः ॥३॥ भूर्भुवस्तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहीति । अग्निर्वै भर्गः । आदित्यो वै भर्गः । चन्द्रमा वै भर्गः ॥४॥ स्वर्धियो यो नः प्रचोदयादिति । यज्ञो वै प्रचोदयाति । स्त्री च वै पुरुषश्च प्रजनयतः ॥५॥ भूर्भुवस्स्वस्तत् सवितुर्वरेण्यम्भर्गो देवस्य धीमहि धियो यो नः प्रचोदयादिति[2] । यो वा एतां सावित्री-मेवं वेदाऽप पुनर्मृत्युं तरति सावित्र्या एव सलोकतां जयति सावित्र्या एव सलोकतां जयति ॥८।४।२८॥

द्वादशोऽनुवाके द्वितीयः खण्डः । द्वादशोऽनुवाकस्समाप्तः ।

इत्युपनिषद्ब्राह्मणं समाप्तम् ॥

---

१-सँ । २ 'यज्ञो वै प्रचोदयाति । स्त्री च वै पुरुषश्च प्रजनयतः' अधिक करो ॥

# १—ऋषि—नामों की सूची।

वं० से वंश का अभिप्राय है।


अगस्त्य, ४।१५।१॥१६।१॥ वं०।

अतिसाम प्रतुरेत, ४।२६।१५॥

अनुवक्ता सात्यकीर्त, १।५।४॥

अभयद् आसमात्य, ४।८।७॥

अभिप्रतारी, ३।१।२१॥२।२,३,१३॥

अभिप्रतारी काक्षसेनि १।५६।१॥३।१।२१॥

अयास्य, २।८।७,८॥११।८॥

अयास्य आङ्गिरस, २।७।२,६॥८।३॥

अषाढ उत्तर पाराशर्य ३।४१।१॥ वं०

आङ्गिरस, २।२।६॥ देखो अयास्य आं०।

आजकेशी, १।६।३॥

आज द्विश, देखो बभ्र आ०।

आट्णार, देखो पार आ०।

आत्रेय, देखो दक्ष कात्यायनि आ०, शङ्ख शाख्यायनि आ०।

आरुणि, १।४२।१॥

आरुणेय, ३।५।१॥

आर्त्तकायण, देखो गल्नुनस आ०।

आलुकेय, देखो ह्रत्स्वाशय आ०।

आसमात्य, देखो अभयद आ०।

इन्द्रोत दैवाप शौनक, ३।४०।१॥ वं०।

इष श्यावाश्वि, ४।१६।१॥ वं०।

उच्चैःश्रवस कौपयेय, ३।२९।१,२,३॥

उत्तर, देखो आषाढ उ० पाराशर्य ।

उमा हैमवती, ४।२७।१॥

उलुक्य (?) जानश्रुतेय, १।६।३॥

उशनः काव्य, २।७।२,६॥

ऋष्यश्रृङ्ग काश्यप, ३।४०।१॥ वं० ।

ऋतुरेत (?), देखो अतिसाम प० ।

ऐक्ष्वाक, देखो भगीरथ ऐ० ।

ऐक्ष्वाक वार्ष्णि, १।५।४॥

ऐतरेय, देखो महिदास ।

ऐन्द्रोति, देखो दृति ऐ० शौनक ।

कंस वारकी, ३।४२।१॥ वं० ।

कंस वारक्य, ३।४१।१॥ वं० ।४।१७।१॥ वं० ।

कक्षीवन्त, २।५।११॥

कश्यप, ४।३।१॥

कात्त्सेनि, देखो अभिप्रतारी का० ।

कापद्विय, ३।१०।२॥ देखो जनश्रुत का० । नगरी जानश्रुतेय का० ।
सायक जानश्रुतेय का० ।

कात्यायनि, देखो दत्त का० आत्रेय ।

कापेय, ३।२।२,१२॥ देखो शौनक का० ।

काक्षीरादि, २।४।४॥

काव्य, देखो उशनः का० ।

काश्यप, ३।४०।२॥ वं०। देखो ऋष्यश्रृङ्ग का०। देवतरः श्यावसायन
का० । शुष वाह्नेय का० ।

कुबेर वारक्य, ३।४१।१॥ वं० ।

कुरु, (एकव०) १।५६।१।(बहुव०)१।३८।१॥ देखो कौरव ।

कुरुपञ्चालाः, ३।७।६॥८।७॥३०।६,९॥४।७।२॥७।२॥

कृष्णदत्त लौहित्य, ३।४२।१॥ वं० । देखो त्रिवेद कृ० लौहित्य ।

कृष्णधृति सात्यकि, ३।४२।१॥ वं० ।

कृष्णरात लौहित्य, ३।४२।१॥ वं० । देखो त्रिवेद कृ० लौहित्य ।

केशी द.र्भ्य, ३।२६।१,२॥

कौपयेय, देखो उच्चैःश्रवः ।

क्रातुजातेय, देखो राम क्रा० वैयाघ्रपद्य ।

क्षैमि, देखो सुदक्षिण क्षै० ।

गाङ्गुनस आर्त्तिकायणि, १।३८।४॥

गन्धर्वाप्सरसः, १।४१।१॥४४।१०,११॥३।५।१॥

गुप्त, देखो वैपश्चित दार्ढजयन्ति गु० लौहित्य ।

गोबल वार्ष्ण, १।६।१॥

गोश्रु (जाबाल), ३।७।७॥

गौतम (आरुणि) १।४२।१॥

गौषूक्ति, ४।१६।१॥ वं० ।

चैकितानेय, १।३७।७॥२।५।२॥ (बहुव०) १।४१।१॥

देखो ब्रह्मदत्त चै० । वासिष्ठ चै० ।

चैत्ररथि, देखो सत्याधिवाक चै० ।

जनश्रुत काण्डविय, ३।४०।२॥ वं० ।

जनश्रुत वारक्य, ३।४१।१॥ वं० ।४।१७।१॥ वं० ।

जमदग्नि, ३।३।१३॥४।३।१॥

जयक लौहित्य, ३।४२।१॥ वं० ।

जयन्त, देखो यशस्वी ज० लौहित्य ।

जयन्त पाराशर्य, ३।४१।१॥ वं० ।

जयन्त वारक्य, ३।४१।१॥ वं० । (इस नाम के दो व्यक्ति) ४।१७।१॥ वं० ।

जानश्रुत, देखो नगरी जा० काण्डविय ।

जानश्रुतेय, देखो उलुक्य जा० । सायक जा० काण्डविय ।

जाबाल, ३।६।६॥ (द्विव०) ३।७।२,३,५,७,८॥ देखो गोश्रु शुक्र ।

जैवलि, १।३८।४॥
उशाखायन, ४।१६।१॥ वं० ।
त्रसदस्यु, २।५।११॥
त्रिवेद कृष्णरात लौहित्य, ३।४२।१॥ वं० ।
दक्ष कात्यायनि आत्रेय, ३।४१।१॥ वं० ।
दृढजयन्त लौहित्य, ३।४२।१॥ वं० ।
दार्ढजयन्ति, देखो वैपश्चित दा० गुप्त लौहित्य, वैपश्चित दा० दृढजयन्त लौहित्य ।
दार्भ्य, देखो केशी दा० ।
दाल्भ्य (ब्रह्मदत्त चैकितानेय), १।३८।१॥५८।३॥
दाल्भ्य, देखो बक दा० ।
दृढजयन्त, देखो विपश्चित दा० लौहित्य, वैपश्चित दार्ढजयन्त दृ० लौहित्य ।
दृति ऐन्द्रोति शौनक, ३।४०।२॥ वं० ।
देवतरस् श्यावसायन काश्यप, ३।४०।२॥ वं० ।
दैवाप, देखो इन्द्रोत दै० शौनक ।
धृतराष्ट्र, ४।२६।१५॥
नगरी जानश्रुतेय काण्ड्विय, ३।४०।१॥ वं० ।
नाक, ३।१६।५॥
पतङ्ग प्राजापत्य, ३।३०।३॥
परमेष्ठी प्राजापत्य, ३।४०।२॥ वं० ।
पल्लिगुप्त लौहित्य, ३।४२।१॥ वं० ।
पाराशर्य, देखो अषाढ उत्तर पा० । जयन्त पा० । वैपश्चित शकुनिमित्र पा० । सुदत्त पा० ।
पार्थश्रवस, ४।२६।१५॥
पार्ष्णी रौशन, २।७।८॥

पुलुष प्राचीनयोग्य, ३।४०।२॥ वं०।
पृथु वैन्य, १।१०।६॥२४।६॥३५।१॥
पौलुषि, देखो सत्ययज्ञ पौ० प्राचीनयोग्य।
पौलुषित, देखो सत्ययज्ञ पौ०।
प्रतीदर्श, ४।८।७॥
प्राचीनयोग्य, १।३६।१॥ देखो पुलुष प्रा०। सत्ययज्ञ पौलुषि प्रा०। सोमशुष्म सात्ययज्ञि प्रा०।
प्राचीनशाल (बहुव०), ३।१०।१॥
प्राचीनशालि, ३।७।२,३,५,७॥१०।१॥
प्राजापत्य, देखो परमेष्ठी प्रा०।
प्रातृद भाल्ल, ३।३१।४॥
प्रास्रवण, देखो प्लक्ष प्रा०।
प्रोष्ठपाद वारक्य, ३।४१।१॥ वं०।
प्लक्ष प्रास्रवण, ४।२६।१२॥
बक दाल्भ्य, १।६।३॥४।७।२॥
बभ्रु आजद्विष, २।७।२,६॥
बाभ्रव्य, देखो शङ्ख बा०।
ब्रह्मदत्त चैकितानेय, १।३८।१॥५६।१॥
भगेरथ ऐक्ष्वाक, ४।६।१,२॥
भाल्ल, देखो प्रातृद भा०।
भाल्लविन (बहुव०), २।४।७॥
मनु, ३।१५।२॥
महिदास ऐतरेय, ४।२।११॥
मातरिश्वन्, ४।२०।८॥
मानव, देखो शर्यात मा०।
मित्रभूति लौहित्य, ३।४२।१॥ वं०

मुख सामश्रवस, ३।५।२॥

यशस्वी जयन्त लौहित्य, ३।४२।१॥ वं० ।

राम क्रातुजातेय वैयाघ्रपद्य, ३।४०।२॥ वं० । ४।१६।१॥ वं०।

रोहिणा, १।२९।७,१०॥

लौहित्य, देखो कृष्णधृत लौ०, कृष्णरात लौ०, जयक लौ०, त्रिवेद कृष्णरात लौ०, दक्ष जयन्त लौ०, पल्लिगुप्त लौ, मित्रभूति लौ०, यशस्वी जयन्त लौ०, विपश्चित दृढजयन्त लौ०, वैपश्चित दार्ढजयन्ति गुप्त लौ०, वैपश्चित दार्ढजयन्ति दृढजयन्त लौ०, श्यामजयन्त लौ०, श्यामसुजयन्त लौ०, सत्यश्रवस लौ० ।

वसिष्ठ, ३।२।१३॥१५।२॥१८।६,७॥ तुल० वासिष्ठ ।

वारकि, देखो कंस वा० ।

वारक्य, देखो कंस वा०, कुबेर वा०, जनश्रुत वा०, जयन्त वा०, प्रोष्ठपाद वा० ।

वार्ष्ण्य, देखो पेन्द्वाक वा०, गोबल वा० ।

वासिष्ठ चैकितानेय, १।४२।१॥

वाहेय, देखो शुच वा० काश्यप ।

विपश्चित दृढजयन्त लौहित्य, ३।४२।१॥ वं० ।

विपश्चित शकुनिमित्र पाराशर्य, ३।४१।१॥ वं० ।

विश्वामित्र, ३।३।७॥१५।१॥ (बहुव०) ३।१५।१॥ तुल० वैश्वामित्र ।

वैकुण्ठ (इन्द्र), ४।५।१॥१०।१०॥

वैन्य, १।४५।२॥ देखो पृथु वै० ।

वैपश्चित दार्ढजयन्ति गुप्त लौहित्य, ३।४२।१॥ वं० ।

वैपश्चित दार्ढजयन्ति दृढजन्त लौहित्य, ३।४२।१॥ वं० ।

वैमृध (इन्द्र), ४।१०।१०॥

वैयाघ्रपद्य, देखो राम क्रातुजातेय वै० ।

शकुनिमित्र, देखो विपश्चित् श० पाराशर्य।

शङ्ख बाभ्रव्य, ३।४१।१॥ वं०। ४।१७।१॥ वं०।

शङ्ख शाट्यायनि आत्रेय, ३।४०।१॥ वं०।

शर्य, ४।१०।१०॥

शर्यात मानव, ३।७।१॥-॥३,४॥

शाट्यायनि, १।६।२॥३०।१॥२।२।८॥४।३॥६।१०॥३।१३।६॥२८।४॥
४।१६।१॥ वं०। १७।१॥ वं०। देखो शङ्ख शा० आत्रेय।

शाण्डिल्य, देखो सुयज्ञ शा०।

शालावत्य, १।३८।४॥

शुक्र (जाबाल), ३।७।७॥

शैलन (बहुव०),१।२।३॥२।४।६॥ देखो पार्ष्य शै० सुचित्त शै०।

शौनक, १।५९।२॥ देखो इन्द्रोत दैवाप शौ०, दृति ऐन्द्रोति शौ०।

शौनक कापेय, ३।२।२१॥

श्यामजयन्त लौहित्य (इस नाम के दो व्यक्ति), ३।४२।१॥ वं०।

श्यामसुजयन्त लौहित्य, ३।४२।१॥ वं०।

श्यावसायन, देखो देवतरस् श्या० काश्यप।

श्यावाश्वि, देखो इश श्या०।

श्रुष वाह्नेय काश्यप, ३।४०।१॥ वं०।

श्वाजनि (एक वैश्य), ३।५।२॥

सत्ययज्ञ पौलुषित, १।२८।१॥

सत्ययज्ञ पौलुषि प्राचीनयोग्य, ३।४०।१॥ वं०।

सत्यश्रवस् लौहित्य, ३।४२।१॥ वं०।

सत्याधिवाक चैत्ररथि, १।३८।१॥

सात्यकि, देखो कृष्णधृति सा०।

सात्यकीर्त (बहुव०), ३।३२।१॥ देखो अनुवक्ता सा०।

सात्ययज्ञि (बहुव०), ३।४१५॥ देखो सोमशुष्म सा० प्राचीनयोग्य।

सामश्रवस, देखो मुञ्ज सा० ।
सायक जानश्रुतेय काण्ड्विय, ३।४०।२॥ वं० ।
सुचित्त शैलन, १।१४।४॥
सुदक्षिणा, ३।७।८॥८।६॥ ( देखो सुदक्षिणा क्षैमि )
सुदक्षिणा क्षैमि, ३।६।३॥७।१,४,५,६॥ (देखो सुदक्षिणा) ।
सुदत्त पाराशर्य, ३।४१।१॥ वं०।४।१७।१॥ वं० ।
सुयज्ञ शाण्डिल्य, ४।१७।१॥
सोमबृहस्पति (द्विव०), १।५८।९॥
सोमशुष्म सात्ययज्ञि प्राचीनयोग्य, ३।४०।२॥ वं० ।
हृत्स्वाशय आल्लकेय, ३।४०।२॥ वं०।
हैमवती, देखो उमा है० ।

## २—निर्वचनादि सूची ।

अक्षर, १।२४।१॥४३।८॥१।२४।२॥ ४३।८॥
अन्तरिक्ष, १।२०।४॥
अयास्य, २।८।७॥११।८॥
अर्क्य, ४।२३।४॥
असु, १।४०।७॥
असुर, ३।३५।३॥
आङ्गिरस, २।११।९॥
आदि, १।११।७॥१९।२॥
आदित्य, ४।२।९॥
आवर्त्त, ३।३३।७॥
उरस्, ४।२४।२॥
ऋच् , १।१५।६॥
गायत्र, ३।३८।४॥
देवश्रुत , १।१४।३॥
पतङ्ग, ३।३५।२॥
पश्यत, १।५६।६॥
प्रतिहार, १।११।९॥
प्रसाम, प्रसामि, १।१५।८॥
प्रस्ताव, १।११।६॥
बृहस्पति, २।२।५॥
भीमल, १।५७।१॥
मधुपुत्र, १।५५।१॥
महीया, १।४८।५॥
रुद्र, ४।२।६॥
रोदसी, १।३२।४॥
वसु, ४।२।३॥
वैश्वामित्र, ३।३।६॥

शतसनि, १।५०।४॥
सजात, १।४८।३॥
समुद्र, १।२५।४॥
सामन्, १।३३।७॥ ४०।६॥४८।७॥ ५१।२॥४।१३।२॥ १।१२।५॥ १।५३।५॥
५६।२॥४।२३।३॥
सिन्धु, १।२८।२॥
सुवर्ग, ३।१४।४॥
हरि, १।४४।५॥

## ३-(क) ऋचादिसूची ।

अदितिर्द्यौरदितिः, १।४१।४॥ ऋ० १।८९।१०॥
अपश्यं गोपामनिपद्यमानाम्, ३।३७।१॥ ऋ०१।१६४।३१॥
आत्मा देवानामुत मर्त्यानाम्, ३।२।४॥ तु०छां० उ० ४।३।७॥
आयुर्माता मतिः पिता, ४।१।७॥
इन्द्रमुक्थमृचम्, १।४५।१॥
इमामेषाम्पृथिवीम्, १।२४।७॥ अथ०१०।८।३६॥
उतैषां ज्येष्ठः, ३।१०।१२॥ अथ० १०।८।२८॥
उपाऽस्मै गायत, ३।३८।६,८॥ ऋ० ९।११।१॥
ऋषय एते मन्त्रकृतः, १।४५।२॥
चत्वारि वाक् परिमिता, १।७।३॥४०।१॥ ऋ० १।१६४।४५॥
तत्सवितुर्वरेण्यम्, ४।२८।१॥ ऋ० ३।६२।१०॥
त्र्यायुषं कश्यपस्य, ४।३।१॥ तुल०, अ० ५।२८।७॥
नवो नवो भवसि, ३।२७।११॥ तुल०, ऋ० १०।८४।१९॥
पतङ्गमक्तम्, ३।३५।१॥ ऋ० १०।१७७।१॥
पतङ्गो वाचम्मनसा, ३।३६।२॥ ऋ० १०।१७७।२॥
मयीदं मन्ये भुवनादि, ३।१७।६॥
महात्मनश्चतुरो देवः, ३।२।२॥ तुल० छां० उ० ४।३।६॥

यदूचाया इन्द्र ते शतम्, १।३४।१॥ ऋ० ८।७०।५॥
यस्सप्तरश्मिर्वृषभः, १।२६।७॥ ऋ० २।१२।१२॥
येऽग्नयः पुरीष्याः, ४।३४।१॥ य० १८।६७॥
येभिर्वात इषितः, १।३४।८॥ अथ० १०।८।३५॥
रूपं-रूपम्प्रतिरूपः, १।४४।१॥ ऋ० ६।४७।१८॥
रूपं-रूपम्मघवा, १।४४।८॥ ऋ० ३।५३।८॥
स नो मयोभूः, ४।३।२॥
स यदा वै म्रियते, १।४।७॥
स्त्री सैवाऽग्रे, १।५८।५॥
स्थूणां दिवस्तम्भनीम्, १।१०।९॥

(ख)

अभिजिदस्यभिजय्यासम्, ३।२०।१०॥
अमोऽहमस्मि, (दीर्घपाठ), १।५४।८॥ (संक्षिप्त), ५।७।४॥
अरण्यस्य वत्सोऽसि, ४।४।१॥
उपावर्त्तध्वम्, ३।१९।१॥३४।२॥
गुहासि देवोऽसि, ३।२८।१॥
दिशस्था ओत्रम्, १।२२।८॥
देवेन सवित्रा, ३।१८।३,८॥
पुरुषः प्रजापतिः, १।४९।३,४॥
प्राणा३ प्राणा३ प्राणा३, २।२।७॥
महाम्महा समधत्त, ३।४।५॥
यत्पुरस्ताद्वासीन्द्रः, ३।२१।१॥
विभूः पुरस्तात्सम्पत्, ३।२७।१॥
व्युषि सविता भवसि, ४।५।१॥
श्वेताश्वो दर्शतो, ४।१।१॥
सत्यस्य पन्था, ३।२७।१०॥
सोमः पवते, ३।१९।१॥३५।२॥

